# प्रस्तावना ।

अयि महाशयाः, विदितमस्त्वेतत्तत्रभवतां परमादरणीयवैदिकमार्गावलंबिनां यदस्माभिरध्येतृबालाध्यापकद्विजोपकारकग्रंथमुद्रणाय मितमूल्येन तद्वितरणाय च बद्धपरिकरैः शिक्षाचतुष्टयं, वेदषडंगानि=( शिक्षा–( पाणिनीया ) ज्यौतिषं–( लगधस्य ) छंदः–(पिंगलनागस्य) निघंटुः–( यास्कस्य ), निरुक्तं पूर्वषट्कोत्तरषट्कयुतं (यास्कस्य), श्रौतसूत्रं–पूर्वषट्कोत्तरषट्कयुतं, (आश्वलायनस्य), सूत्रपाठः= अष्टाध्यायी (पाणिनीया), गृह्यसूत्रं ( आश्वलायनस्य ) चेति वेदांगानि, तथा ऋग्वेदसंहिता सपरिभाषासर्वानुक्रमा संहितापारायणहोम=( स्वाहाकार )निर्णयप्रयोगादियुता अकाराद्यनुक्रमेण अष्टकाध्यायवर्गांकनिदर्शकसंहितास्थसर्वमंत्रकोशयुता, ऋक्संहितापदपाठः=(पदानि), ऐतरेयोपनिषदः ( अरणानि ) च मुद्रितानि संतीति । ऐतरेयब्राह्मणमप्यारब्धमुद्रणं तूर्णमेव प्रसिद्धं भवेदितिच । एवं सांगा दशग्रंथा अप्यत्र संपूर्णा एकसमयावच्छेदेन पृथग्वा ग्राहकाणां यथाभिलषितं लब्धुमर्हाएव । परमत्र क्वचन संहितादिमहाग्रंथाध्ययनायाकल्पानां केवलं व्यवहारयाज्ञिकप्रयोगपरिचिचीषूणां कृते ऋग्वेदमंत्रसंहितेयं प्रतिसूक्तं स्फुटमंत्रेषु प्रतिमंत्रं च तत्र तत्र पत्राधश्छंदर्ष्यादिकं संयोज्य वैदिकद्वारा सूक्ष्मेक्षिकया सर्वान्मंत्रान्संशोधय्य सुदृढचिक्कण (ग्लेज) पत्रेषु मुद्रितास्ति । अस्यां प्रायःसर्वत्र याज्ञिकप्रयोगक्रमेण यावच्छक्यं मंत्रयोजना विद्यते । क्वचिच्च तत्रतत्रोपयुक्तानि ब्राह्मणखंडानि सूत्रादिखंडानिच योजितानि संतीति

याज्ञिकानां तदध्येतॄणां चातीव साहाय्यकारिणी स्यादित्याशास्महे । प्रार्थयामश्च " गच्छतःस्खलन " न्यायेन संस्करणावसरे दृग्दोषादिभिरत्र स्खलितं विद्वद्भिः क्षमाशीलैः शोधनीयमनुग्राह्याश्च तादृशस्थलनिदर्शनेन येनोपकृतेन भूयोंकनावसरे साहाय्यंस्यादिति ।

भूयश्च सप्रणयमेवं विज्ञाप्यते—यदि वैदिकविप्रवर्गमिषेणांकितानीमानि पुस्तकानि ब्राह्मणसंघादरभांजि स्युः स्यात्तदास्माकमप्यानंदथुभरेण याज्ञिकग्रंथांकनप्रवृत्तिः । अथच आसेतोराच हिमशिखरिणं षोडशसंस्कारप्रयोगजीवातुभूतत्वेनश्रौतस्मार्तदर्पणायितानां विद्वदग्रेसरैः सबहुमानमादृतानामपि सूक्ष्मदृक्संशोधितशुद्धपाठांकनमंतरा दुःप्राप्यानां—**प्रयोगपारिजातक—प्रयोगरत्न ( नारायणभट्टी ) संस्कारकौस्तुभ—मदनमहार्णव ( कर्मविपाक )—वीरमित्रोदय—प्रतिष्ठेंदु**—शांतिग्रंथादीनां प्रतिसंस्कारं—प्रतिशांति—प्रतीष्टापूर्तचोपकारकाणां ग्रंथरत्नानां शुद्धसंस्करणपूर्वकमुद्रणे स्वल्पमूल्येन वितरणेचानुपदमेव प्रयतामह इत्यलमतिविस्तरेणेतिशिवं ।

---

## मन्त्रसंहितास्थविषयानुक्रमणिका ।

---

श्रीवेदपुरुषायनमः ॥ ॥ ( अथमांगलिकमंत्राः ) ॥ हरिःॐम् ॥ स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ यशस्करंबलवंतंप्रभुत्वंतमेवराजाधिपतिर्बभूव ॥ संकीर्णनागाश्वपतिर्नराणांसुमंगल्यंसततंदीर्घमायुः ॥२॥ कनिक्रदज्जनुषंप्रब्रुवाणऽइयर्तिवाचमरितेवनावं ॥ सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥ मात्वाश्येनऽउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽअस्ता ॥ पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवक्रंददक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते ॥ मानःस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ २ ॥ प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऽऋतुथाशकुंतयः ॥ उभेवाचौवदतिसामगाऽइवगायत्रंचत्रैष्टुभंचानुराजति ॥ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः ॥ ३ ॥ भद्रंवददक्षिणतोभद्रमुत्तरतोवद ॥ भद्रंपुरस्तान्नोवदभद्रंपश्चात्कपिंजल ॥ भद्रंवदपुत्रैर्भद्रंवदगृहेषुच ॥ भद्रमस्माकंनोवदभद्रंनोअभयंकृधि ॥ भद्रम

---

१ स्वस्तिनइंद्रइत्यस्यगोतमोविश्वेदेवाविराट्स्थाना ॥ २ कनिक्रददितितृचस्यसूक्तस्यगृत्समदःशकुंतइंद्रस्त्रिष्टुप् ॥ ३ प्रदक्षिणिदितितृचस्यगृत्समदःशकुंतोजगतीद्वितीयाशक्वर्यष्टिर्वा ॥

धस्तांन्नोवदभद्रमुपरिष्टान्नोवद ॥ भद्रंभद्रंनऽआभर भद्रंनःसर्वतोवद ॥ असपत्नंपुरस्तान्नःशिवंदक्षिणतस्कृधि ॥ अभयंसततंपश्चाद्भद्रमुत्तरतोगृहे ॥ यौवनानिमहयसिजिग्युषामिवदुंदुभिः ॥ शकुंतकप्रदक्षिणंशतपत्राभिनोवद ॥४॥ ॥(पुण्याहवाचनमंत्राः)॥ [1]गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ [2]निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां ॥ नऋतेत्वत्क्रियतेकिंचनारेमहामर्कंमघवन्चित्रमर्च ॥ [3]महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ [4]ओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ [5]आकलशेषुधावतिपवित्रेपरिषिच्यते ॥ उक्थैर्यज्ञेषुवर्धते ॥ [6]इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ [7]गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ [8]याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥

१ गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती ॥ २ निषुसीदेत्यस्यवैरूपोनभःप्रभेदनइंद्रस्त्रिष्टुप् ॥ ३ महीद्यौःकाण्वोमेधातिथिर्भूमिर्गायत्री ॥ ४ ओषधयइत्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥ ५ आकलशेष्वित्यस्यकाश्यपोदेवलःपवमानसोमोगायत्री ॥ ६ इमंमेगंग इत्यस्यसिंधुक्षित्प्रैयमेधोनद्योजगती ॥ ७ गंधद्वारामानंदकर्दमचिक्लीतेंदिरासुताःश्रीरनुष्टुप् ॥ ८ याओषधीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥

मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ [1]अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं ॥ [2]स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ [3]याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ [4]सहिरत्नानिदाशुषेसुवातिसविताभगः ॥ तंभागंचित्रमीमहे ॥ [5]हिरण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ [6]युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्यो३ मनसादेवयंतः ॥ [7]पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥ [8]तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ [9]भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ [10]द्रविणोदाद्रवि

१ अश्वत्थेवइत्यस्याथर्वणोभिषगोषधिस्तुतिरनुष्टुप् ॥ २ स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री ॥ ३ याःफलिनीरित्यस्याथर्वणोभिषगोषधिस्तुतिरनुष्टुप् ॥ ४ सहिरत्नानीत्यस्यश्यावाश्वःसवितागायत्री ॥ ५ हिरण्यरूपइत्यस्यशौनकोपान्नपात्त्रिष्टुप् ॥ ६ युवासुवासा इत्यस्यविश्वामित्रोयूपस्त्रिष्टुप् ॥ ७ पूर्णादर्विविश्वेदेवाःशतक्रतुरनुष्टुप् ॥ ८ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ ९ भद्रंकर्णइत्यस्यगौतमो विश्वेदेवास्त्रिष्टुप् ॥ १० द्रविणोदाइत्यस्यकुत्सोद्रविणोदाअग्निस्त्रिष्टुप् ॥

णसस्तुरस्यंद्रविणोदाःसर्नरस्यप्रयंसत् ॥ द्रविणोदावीरवंतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ [1]सवितापश्चातात्स वितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ [2]नवोनवोभ वतिजायमानोह्नांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ [3]उच्चादिविदक्षिणावंतो अस्थुर्येऽअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ आपंउंदंतुजीवसेदीर्घायुत्वा यवर्चसे ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वम श्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ संत्वासिंचा मियजुषाप्रजामायुर्धनंच ॥ [4]उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्व तोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ ( ऐ०ब्रा० ) याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्या मेवतंलक्ष्मींसंभावयतिपुण्याँल्लक्ष्मींसंस्कुरुते ॥ ( तैत्तिरी० ) यत्पुण्यंनक्षत्रं ॥ तद्बट्कुर्वीतोपव्युषं ॥ यदावैसूर्यउ देति ॥ अथनक्षत्रंनैति ॥ यावतितत्रसूर्योगच्छेत् ॥ यत्रजघन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएव

१ सवितापश्चातादित्यस्यलुशोधानाकोविश्वेदेवास्त्रिष्टुप् ॥ २ नवोनवइत्यस्यसूर्यासावित्रीचंद्रमसस्त्रिष्टुप् ॥ ३ उच्चादिवीत्यस्यांगिरसो दिव्यःप्राजापत्योदक्षिणावातद्दातारोवात्रिष्टुप् ॥ ४ उद्गातेवेत्यस्यगृत्समदःशकुंतःशक्करी ॥



वकुरुते ॥ तानिवाएतानि ॥ यमनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरु ते ॥ [1]स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ आदित्यउदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंतिस्वस्त्युद्यंति ॥ स्वस्ति नइंद्रोवृद्धश्रवाः० ॥ १ ॥ ( तैत्ति० ) अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरज सःपुरस्तात् ॥ संवत्सरीणममृतंस्वस्ति ॥ [2]ऋध्यामस्तोमंसनुयामवाजमानोमंत्रैःसरथेहोपयातं ॥ यशोनपक्वंमधुगो ष्वंतराभूतांशोअश्विनोःकाममप्राः ॥ सर्वामृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टा द्गायत्र्यासर्वतोद्वादशाहंपरिभूयसर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोतियएवंवेद ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदे वंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिच्छंदांसि ॥ त्रीणिसवनानि ॥ त्रयइमेलोकाः ॥ ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ [3]श्रियेजातःश्रियऽ आनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंत

१ स्वस्तयेवायुमित्यस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् ॥ २ ऋध्यामस्तोममित्यस्यकाश्यपोभूतांशोश्विनौत्रिष्टुप् ॥ ३ श्रियेजातइत्यस्यकण्वः पवमानसोमस्त्रिष्टुप् ॥

च्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ यस्मिन्ब्रह्माभ्यर्जयत्सर्वमेतत् ॥ अमुंचलोकमिदमूचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्यं ॥ श्रियंदधात्वहृणीयमानं ॥ अहेर्बुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयीविदाविदुः ॥ ऋचःसामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ तदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ [1]वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ [2]समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद‍ताआपोदेवीरिहमामवंतु ॥ याआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजा

1 वास्तोष्पतइतिचतसृणांमैत्रावरुणिर्वास्तोष्पतिस्त्रिष्टुप् ॥ 2 समुद्रज्येष्ठाइतिचतसृणांमैत्रावरुणिर्वसिष्ठआपस्त्रिष्टुप् ॥

वरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ [1]त्रायंतामिहदेवास्त्रायतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमरपाअसत् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ [2]इमाआपःशिवतमाइमाःसर्वस्यभेषजीः॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ [3]देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्याय ॥ आमूरजप्रत्यावर्तयेमाःकेतुमद्दुंदुभिर्वावदीति ॥ समश्वपर्णाश्चरंतिनोनरोस्माकमिंद्ररथिनोजयंतु ॥ इतिपुण्याहवाचनोपयुक्तमंत्राः ॥ ॥ ॥

॥ ( अथनांदीश्राद्धमंत्राः ) ॥ ॥ [4]उपास्मैगायतानरःपवमानायेंदवे॥ अभिदेवाँइयक्षते॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसे

1 त्रायंतामितितिसृणांसप्तर्षयआपोनुष्टुप् ॥ 2 इमाआपइतितिसृणामैतरेयआपोनुष्टुब्जगत्यनुष्टुभः ॥ 3 देवस्यत्वेत्यस्यैतरेयःसविताश्विनौपूषाचयजुः ॥ 4 उपास्माइतिपंचर्चस्यासितोदेवलोवापवमानसोमोगायत्री ॥

रुणायंदिविस्पृशे ॥ सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिः सुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ १ ॥ [१]प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तंनोअस्तुवयंस्यामपतयोरयीणाम् ॥ [२]इळामग्नेपुरुदंससनिंगोःशश्वत्तमंहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ इळामुपह्वयतेपशवोवाइळापशूनेवतदुपह्वयतेपशून्यजमानेदधातिदधाति ॥ इतिनांदीश्राद्धोपयुक्तामंत्राः ॥ ॥ ॥

॥ ( उत्सर्जनस्थालीपाकोपयुक्तामंत्राः ) ॥ [३]जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ॥ विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥ [४]एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् ॥ [५]चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ मेषारूढोजटाबद्धोगौरवर्णोमहौजसः ॥ धूम्रध्वजोलोहिताक्षःसप्तार्चिःसर्वकामदः ॥ आत्माभिमुखमासीन

१ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ २ इळामग्नेविश्वामित्रोग्निस्त्रिष्टुप् ॥ ३ जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ॥ ४ एह्यग्नेराहूगणोगोतमोग्निस्त्रिष्टुप् ॥ ५ चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप् ॥



एवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव ॥ प्रत्यवरोहणसमारोपमंत्रौ ॥ प्रत्यवरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः ॥ [१]तुभ्यंताअंगिरस्तमविश्वाःसुक्षितयःपृथक् ॥ अग्नेकामाययेमिरे ॥ [२]विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्नमसागृणानो३स्माकंबोध्यवितातनूनां ॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ प्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे ॥ सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमग्नीदमे ॥ [३]अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं १ [४]कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः ॥ वृश्चिकस्यारसंविषमरसंवृश्चिकतेविषं २ [५]त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिः ३ [६]आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसि

१ तुभ्यंताइत्यस्यांगिरसोविरूपोग्निर्गायत्री ॥ २ विश्वानिनइतितृचस्यात्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ॥ ३ अग्निमीळेमधुच्छंदाअग्निर्गायत्री ॥ ४ कुषुंभकस्तदगस्त्योतृणसूर्याअनुष्टुप् ॥ ५ त्वमग्नेशौनकोगृत्समदोग्निर्जगती ॥ ६ आवदन्गृत्समदःशकुंतोजगती ॥

कर्करियैथाबृहद्वदेमविदथेसुवीराः ४ सोमस्यमातवसंवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ॥ देवाँअच्छादीद्युंजेअद्रिंश
मायेअग्नेतन्वँजुषस्व ५ गृणानाजमदग्निनायोनावृतस्यसीदतं ॥ पातंसोममृतावृधा ६ त्वांह्यग्नेसदमित्समन्यवोदे
वासोदेवमरतिंन्येरिरइतिक्रत्वान्येरिरे ॥ अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंविश्वमादेवंजनतप्रचेतसं ७
धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं१तरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामंमधुमंतंतऊर्मिं ८ अ
बोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ९ गंता
नोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएवयामरुत् ॥ ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदः
१० त्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ॥ त्वंसींवृषन्नकृणोर्दुष्टरीतुसहोविश्वस्मैसहसेसहध्यै ११ योनः
स्वोअरणोयश्चनिष्ट्योजिघांसति ॥ देवास्तंसर्वेधूर्वंतुब्रह्मवर्ममममांतरं ॥ १२ ॥ अग्निंनरोदीधितिभिररण्योर्हस्तच्युती

---

१ सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ॥ २ गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री ॥ ३ त्वांह्यग्नेगौतमोवामदेवोग्निरष्टी ॥
४ धामंतेगौतमोवामदेवआपोजगती ॥ ५ अबोध्यात्रेयोबुधगविष्ठिरावग्निस्त्रिष्टुप् ॥ ६ गंतानआत्रेयएवयामरुन्मरुतोतिजगती ॥ ७ त्वं
ह्यग्नेबार्हस्पत्योभारद्वाजोग्निस्त्रिष्टुप् ॥ ८ योनस्वःपायुर्भारद्वाजोविश्वेदेवाअनुष्टुप् ॥ ९ अग्निंनरोमैत्रावरुणिर्वसिष्ठोग्निर्विराट् ॥



जनयंतप्रशस्तं ॥ दूरेदृशंगृहपतिमथर्युं ॥ १३ ॥ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमशनिंया
तुमद्भ्यः ॥ १४ ॥ माचिदन्यद्विशंसतसखायोमारिषण्यत ॥ इंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसत ॥१५॥
आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये ॥ सोभर्याउपसुष्टुतिंमादयस्वस्वर्णरे ॥ १६ ॥ स्वादिष्ठयामदिष्ठयापवस्वसो
मधारया ॥ इंद्रायपातवेसुतः ॥ १७ ॥ यत्तेराजञ्छृतंहविस्तेनसोमाभिरक्षनः ॥ अरातीवामानस्तारीन्मोचनःकिंच
नाममदिंद्रायेंदोपरिस्रव ॥१८॥ अग्नेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वान्तमसोज्योतिषागात् ॥ अग्निर्भानुनारुशतास्वं
गआजातोविश्वासद्मान्यप्राः ॥ १९ ॥ समानीवआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहास
ति ॥ २० ॥ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वंस्विष्टंसुहुतंकरोतुमे ॥
अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामान्त्समर्धयस्वाहा ॥ तच्छंयोरावृ
णीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीःस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः॥ ऊर्ध्वंजिगातुभेषजंशंनोअस्तुद्विपदेशंचतुष्पदे ॥

---

१ प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठेंद्रासोमावनुष्टुप् ॥ २ माचित्काण्वःप्रगाथइंद्रोबृहती ॥ ३ आग्नेयाहिसौभरिरग्नामरुतोनुष्टुप् ॥ ४
स्वादिष्ठयामधुच्छंदाःपवमानसोमोगायत्री ॥ ५ यत्तेराजन्मारीचःकश्यपःसोमःपंक्तिः ॥ ६ अग्नेबृहन्नात्यस्त्रितोग्निस्त्रिष्टुप् ॥ ७ समा
नीवःसंवननःसंज्ञानमनुष्टुप् ॥ ८ यदस्येतिहिरण्यगर्भोग्निःस्विष्टकृदतिधृतिः ॥ ९ तच्छंयोःशंयुर्विश्वेदेवाःशक्करी ॥

ॐम् नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥३॥
[1]अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि॥ अयासावयंसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजं ॥ [2]अतोदेवा० ॥
[3]इदंविष्णुर्विचक्रमे० ॥ [4]अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथंस्वाहा ॥
पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः॥ अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथंस्वाहा ॥ [5]यत्पाकत्रामनसादीनदक्षान
यज्ञस्यमन्वतेमर्त्यासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऋतुशोयजाति ॥ [6]यद्वोदेवाअतिपातयानिवाचाच
चप्रयुतीदेवहेळनं ॥ अरायोअस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतन ॥ यन्मआत्मनोमिंदाभूदग्निस्तत्पुन
राहाज्जातवेदाविचर्षणिः ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योः ॥ आभिर्गी
र्भिर्यदतोनऊनमाप्यायहरिवोवर्धमानः॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्याम ॥ पूर्णमसिपूर्णमे
भूयाःसुपूर्णमसिसुपूर्णमेभूयाःसदसिसन्मेभूयाःसर्वमसिसर्वमेभूयाअक्षितिरसिमामेक्षेष्ठाः॥ प्राच्यांदिशिदेवाऋत्विजो
मार्जयंतां॥ दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां॥ अपउपस्पृश्य प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां॥ उदीच्यांदि

१ अयाश्चेतिविमदोअयाअग्निःपंक्तिः ॥ २ अतोदेवामेधातिथिर्देवागायत्री ॥ ३ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ ४ अनाज्ञातमि-
तिमंत्रद्वयस्यहिरण्यगर्भोग्निरनुष्टुप् ॥ ५ यत्पाकत्रेत्यास्यत्रितोग्निस्त्रिष्टुप् ॥ ६ यद्वोदेवाअभितपामरुतस्त्रिष्टुप् ॥



श्यापओषधयोवनस्पतयोमार्जयंतां ॥ ऊर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयंतां ॥ [1]आपोअस्मान्मातरःशुंधयं
तुघृतेननोघृतप्वःपुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ [2]इदमापःप्रवहतयत्किंचदुरितंमयि॥
यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं ॥ सुमित्र्यानआपओषधयःसंतु ॥ दुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टि ॥ यंचवयंद्वि
ष्मःतंहन्मि ॥ माहंप्रजांपरासिचंयानःसयावरीस्थन ॥ समुद्रेवोनिनयानिस्वंपाथोअपीथ ॥ [3]अग्नेत्वंनोअंतमउतत्रा
ताशिवोभवावरूथ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसम
स्मात् ॥ तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ [4]अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमम् ॥ अतूर्तंश्राव
यत्पतिंपुत्रंददातिदाशुषे ॥ अग्निर्ददातिसत्पतिंसासाहयोयुधानृभिः ॥ अग्निरत्यंरघुष्यदंजेतारमपराजितं ॥ [5]मान
स्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥
ॐचमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमःअग्नयेनमः स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञां

१ आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् ॥ २ इदमापःसिंधुद्वीपआपोनुष्टुप् ॥ ३ अग्नेत्वंनइतिचतसृणांगौपायनाबंधुःसुबंधुः
श्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयोग्निर्द्विपदाविराट् ॥ ४ अग्निस्तुविश्रवस्तममितिद्वयोर्वसूयवोग्निरनुष्टुप् ॥ ५ मानःस्तोकइत्यस्यकुत्सो
रुद्रोजगती ॥

विद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहनॐनमः ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः॥ प्रायश्चित्तान्यशेषाणितपःकर्मात्मकानिवै ॥ यानितेषामशेषाणांकृष्णानुस्मरणंपरं ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ समुद्रादूर्मिर्मधुमाँउदारदुपांशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँऽआविवेश ॥ त्रिधाहितंपणिभिर्गुह्यमानंगविदेवासोघृतमन्वविंदन् ॥ इंद्रएकंसूर्यएकंजजानवेनादेकंस्वधयानिष्टतक्षुः॥ एताअर्षंतिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यआसां ॥ १ ॥ सम्यक्स्रवंतिसरितोनधेनाअंतर्हृदामनसापूयमानाः ॥ एतेअर्षंत्यूर्मयोघृतस्यमृगाइवक्षिपणोरीषमाणाः ॥ सिंधोरिवप्राध्वनेशूघनासोवातप्रमियःपतयंतियह्वाः ॥ घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिंदन्नूर्मिभिःपिन्वमानः ॥ अभिप्रवंतसमनेवयोषाःकल्याण्य१स्मयमानासोऽअग्निं ॥ घृतस्यधाराःसमिधोनसंतताजुषाणोहर्यतिजातवेदाः ॥ कन्याऽइववहतुमेतवाउऽअंज्यंजानाऽअभिचा

१ समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवोग्निःसूर्योवापोवागावोवाघृतस्तुतिर्वात्रिष्टुबंत्याजगती ॥

कशीमि ॥ यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवंते ॥ अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवंते ॥ धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्य१ंतरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामममधुमंतंतऊर्मिं ॥ १विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षे ॥ इध्माबर्हिषोर्बंधनेकेचिन्मंत्राविच्छंति ॥ तत्रबर्हिषि ॥ इंद्राण्यैसन्नहनं ॥ पूषातेग्रंथिंग्रथ्नातु ॥ सतेमास्थात् ॥ इध्मे । यत्कृष्णोरूपंकृत्वाप्राविशस्त्वंवनस्पतीन् ॥ ततस्त्वांपंचदशधासंभरामिसुसंभृता ॥ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ शिरसि ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखे ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ हृदये ॥ ॐवामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ गुह्ये ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ पादयोः ॥ अग्निरितिभस्मवायुरितिभस्म जलमितिभस्म स्थलमितिभस्मव्योमेतिभस्मसर्वंहवा

१ विज्योतिषेत्यस्यजारोवृशोग्निस्त्रिष्टुप् ॥

इदंभस्म॥मानस्तो० । गंधद्वारांदुराधर्षां० । अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा ॥ [1]बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि ॥ प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि ॥ [2]मावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं ॥ [3]स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ [4]आयनेतेपरायणेदूर्वारोहंतुपुष्पिणीः ॥ ह्रदाश्चपुंडरीकाणिसमुद्रस्यगृहाइमे ॥ [5]तत्सवितुर्वरेण्यं० ॥ [6]त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं ॥ ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः ॥ [7]यमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ [8]तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ [9]वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ [10]तंसूर्यंरोदसीउभेदोषावस्तोरुपब्रुवे ॥ भोजेष्वस्माँअभ्युच्चरासदा ॥ [11]अधःपश्यस्वमो

---

१ बळित्थेत्यस्यात्रिःपृथिव्यनुष्टुप् ॥ २ मावोरिषदित्यस्याथर्वणोभिषगोषधिस्तुतिरनुष्टुप् ॥ ३ स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री ॥ ४ आयनेतेतिशार्ङ्गोजरिताद्रोणःसारिसृक्कःस्तंबमित्रश्चाग्निरनुष्टुप् ॥ ५ तत्सवितुर्विश्वामित्रःसवितागायत्री ॥ ६ त्रातारमिंद्रंगर्गइंद्रस्त्रिष्टुप् ॥ ७ यमायसोमंवैवस्वतोयमोयमोनुष्टुप् ॥ ८ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ ९ वयंसोममित्यस्यगौपायनाबंधुःसुबंधुःश्रुतबंधुर्विश्वेदेवागायत्री ॥ १० तत्सूर्यमित्यस्यविश्वमनामित्रावरुणावुष्णिक् ॥ ११ अधःपश्यस्वेतिमेध्यातिथिरिंद्रोनुष्टुप् ॥

परिसंतरांपादकौहर ॥ मातेकशप्लकौदृशन्स्त्रीहिब्रह्माबभूविथ ॥ [1]सहस्रशीर्षापुरुषः० ॥ [2]अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते ॥ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् ॥ यक्ष्मंदोषण्य१मंसाभ्यांबाहुभ्यांविवृहामिते ॥ आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते ॥ [3]नाभानाभिंनआददेचक्षुश्चित्सूर्येसचा ॥ कुवेरपत्यमादुहे ॥ [4]त्वमिंद्रसजोषसमर्कंबिभर्षिबाह्वोः ॥ वज्रंशिशानओजसा ॥ [5]सोमानंस्वरणंकृणुहिब्रह्मणस्पते ॥ कक्षीवंतंयऔशिजः ॥ [6]यःकुक्षिःसोमपातमःसमुद्रइवपिन्वते ॥ उर्वीरापोनककुदः ॥ [7]बह्वीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य ॥ इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः ॥ [8]ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ॥ [9]मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ [10]एतावानस्यमहिमा

---

१ सहस्रशीर्षानारायणःपुरुषोनुष्टुप् ॥ २ अक्षीभ्यामितितृचस्यकाश्यपोविवहायक्ष्महानुष्टुप् ॥ ३ नाभानाभिमित्यस्यासितःपवमानसोमोगायत्री ॥ ४ त्वमिंद्रसजोषसइत्यस्यमातरोदेवजामयइंद्रोगायत्री ॥ ५ सोमानमित्यस्यमेधातिथिर्ब्रह्मणस्पतिर्गायत्री ॥ ६ यःकुक्षिःसोमइत्यस्यमधुच्छंदाइंद्रोगायत्री ॥ ७ बह्वीनामित्यस्यपायुर्भारद्वाजइषुधिस्त्रिष्टुप् ॥ ८ ऊरुभ्यामित्यस्यकाश्यपोविवृहायक्ष्महानुष्टुप् ॥ ९ मेहनादित्यस्यकाश्यपोविवृहायक्ष्मनाशनोनुष्टुप् ॥ १० एतावानस्येतिनारायणःपुरुषोनुष्टुप् ॥

तोज्यायाँश्च पूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ [1]यस्यविश्वानिहस्तयोःपंचक्षितीनांवसु ॥ स्पाशयं स्वयोअस्मद्ध्रुग्दिव्येवाशनिर्जहि ॥ [2]अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतं ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं ॥ मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं ॥ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः ॥ यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं ॥ तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ॥ नमोग्नयेप्सुमतेनमइंद्रायनमोवरुणायनमोवारुण्यैनमोद्भ्यः ॥ यदपांक्रूरंयदमेध्यंयदशांतंतदपगच्छतात् ॥ अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् ॥ तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्बिषः ॥ नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां ॥ यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥ [3]अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः ॥ क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ उ

१ यस्यविश्वानीत्यस्यागस्त्यइंद्रोनुष्टुप् ॥ २ अंगादंगादित्यस्यकाश्यपोविवृहायक्ष्मनाशनोनुष्टुप् ॥ ३ अवतेहेळइतिद्वयोराजीगर्तिःशुनःशेपोवैश्वामित्रोदेवरातोवरुणस्त्रिष्टुप्अंत्याभागीवागायत्री ॥



दुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ [1]याःप्रवतोनिवतउद्वतउदन्वतीरनुदकाश्चयाः ॥ ताअस्मभ्यंपयसापिन्वमानाःशिवादेवीरशिपदाभवंतुसर्वानद्योअशिमिदाभवंतु ॥ [2]इमंमेगंगे० ॥ सितासितेसरितेयत्रसंगथेतत्राप्लुतासोदिवमुत्पतंति ॥ येवैतन्वं१विसृजंतिधीरास्तेजनासोअमृतत्वंभजंते ॥ [3]तरत्समंदीधावतिधारासुतस्यांधसः ॥ तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः ॥ तरत्समंदीधावति ॥ ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्महे ॥ तरत्समंदीधावति ॥ आययोस्त्रिंशतंतनासहस्राणिचदद्महे ॥ तरत्समंदीधावति ॥ [4]एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ इंद्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः ॥ शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ॥ शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥ [5]ऋतंचसत्यं० ॥ [6]ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः ॥ सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदोपरिस्रव ॥ [7]अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा ॥ श्येनस्यचिज्जवसानूतं

१ याःप्रवतोवसिष्ठोनद्यःशक्वरी ॥ २ इमंमेगंगइत्यस्यासिंधुक्षित्प्रैयमेधोनद्योजगती ॥ ३ तरत्समंदीतिचतुर्ऋचस्यसूक्तस्यावत्सारःपवमानसोमोगायत्री ॥ ४ एतोन्विंद्रमितितिसृणामांगिरसइंद्रोनुष्टुप् ॥ ५ ऋतंचमाधुच्छंदसोभाववृत्तिरनुष्टुप् ॥ ६ ऋषेमंत्रकृतामित्यस्यकाश्यपःपवमानसोमःपंक्तिः ॥ ७ अत्रिर्यद्वेत्यस्यात्रेयःसप्तवध्रिरश्विनौत्रिष्टुप् ॥

नेनागच्छतमश्विनाशंतमेन ॥ [1]एवानःस्पृधःसमजासमत्स्विंद्रराधिमिथतीरदेवीः ॥ विद्यामवस्तोरवसागृणंतोभरद्वा
जाउततइंद्रनूनं ॥ [2]प्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे ॥ सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमद
ग्नीदमे ॥ [3]अभित्वागोतमागिराजातवेदोविचर्षणे ॥ द्युम्नैरभिप्रणोनुमः ॥ [4]गृणानाजमदग्निनायोनावृतस्यसीदतं ॥
पातंसोमंमृतावृधा ॥ [5]उतासिमैत्रावरुणोवसिष्ठोर्वश्याब्रह्मन्मनसोधिजातः ॥ द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाःपु
ष्करेत्वाददंत ॥ अत्रेर्यथानुसूयास्याद्वसिष्ठस्याप्यरुंधती ॥ कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ [6]तदस्तुमित्रा०
गृहावै० [7]देवाएतस्यामवदंतपूर्वेसप्तऋषयस्तपसेयेनिषेदुः ॥ भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन्॥
यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः ॥ भूताधिपोदत्तकृतानुसारीकृतांतएतद्दशभिर्जपंति ॥ [8]आग्नाअ
ग्नइहावसेहोत्रांयविष्ठभारतीं ॥ वरूत्रींधिषणांवह १ [9]अधीवासंपरिमातुरिहन्नहतुविग्रेभिःसत्वभिर्यातिविज्रयः ॥

---

१ एवानइत्यस्यभरद्वाजइंद्रस्त्रिष्टुप् ॥ २ प्रसूतोभक्षमित्यस्यविश्वामित्रजमदग्नीइंद्रोजगती ॥ ३ अभित्वेत्यस्यगोतमोग्निर्गायत्री ॥ ४ गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री ॥ ५ उतासिमैत्रेतिवसिष्ठपुत्रोवसिष्ठस्त्रिष्टुप् ॥ ६ तदस्तुमित्रावरुणेत्यस्यात्रेयोप्रतिरथो विश्वेदेवास्त्रिष्टुप् ॥ ७ देवाएतस्यामित्यस्यविश्वेदेवास्त्रिष्टुप् ॥ ८ आग्नाअग्नइत्यस्याअग्निर्गायत्री ॥ ९ अधीवासमित्यस्यौचथ्योदीर्घ तमाअग्निर्जगती ॥



वयोदधत्पद्वतेरेरिहत्सदानुश्येनीसचतेवर्तनीरह २ [1]अयंयज्ञोदेवयाअयंमियेधइमाब्रह्माण्ययमिंद्रसोमः ॥ स्तीर्णब
र्हिरातुशक्रप्रयाहिपिबानिषद्यविमुचाहरीइह ३ [2]अतीयामनिदस्तिरःस्वस्तिभिर्हित्वावद्यमरातीः ॥ वृष्टीशंयोरापउ
स्रिभेषजंस्याममरुतःसह ४ [3]अग्नेरक्षाणोअंहसःप्रतिष्मदेवरीषतः ॥ तपिष्ठैरजरोदह ५ [4]अग्नेभववसुषमिधासमिद्धउत
बर्हिरुर्वियाविस्तृणीतां ॥ उतद्वारउशतीर्विश्रयंतामुतदेवाँउशतआवहेह ६ [5]अद्यामुरीययदियातुधानोअस्मियदिवा
युस्ततपपूरुषस्य ॥ अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह ७ [6]अध्वर्योद्रावयात्वंसोममिंद्रःपिपासति ॥
उपनूनंयुयुजेवृषणाहरीआचजगामवृत्रहा ८ [7]अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँआसादयादिह ९ [8]अग्नेबाध
स्वविमृधोविदुर्गहापामीवामपरक्षांसिसेध ॥ अस्मात्समुद्राद्बृहतोदिवोनोपांभूमानमुपनःसृजेह १० ततःशांत्यर्थंआ
नोभद्राःशंनइंद्राग्नीइत्यादिशांतिसूक्तानिसुवृष्ट्यर्थंपर्जन्यसूक्तानिचजपेत् ॥ [9]विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थमघव

---

१ अयंयज्ञोगस्त्यइंद्रस्त्रिष्टुप् ॥ २ अतीवामेतिश्यावाश्वोमरुतःसतोबृहती ॥ ३ अग्नेरक्षाणइत्यस्यवसिष्ठोग्निर्गायत्री० ॥ ४ अग्नेभवे तिद्वयोर्वसिष्ठोग्निर्द्विपदात्रिष्टुप् ॥ ५ अद्यामुरीत्यस्यवसिष्ठइंद्रासोमौत्रिष्टुप् ॥ ६ अध्वर्योइत्यस्यकाण्वोमेधातिथिरिंद्रःप्रगाथः ॥ ७ अग्निं दूतंपुरोदधइतिविरूपोग्निर्गायत्री ॥ ८ अग्नेबाधस्वेत्यार्ष्टिषेणोदेवापिर्वृष्टिकामोविश्वेदेवास्त्रिष्टुप् ॥ ९ विश्वेत्तातेइतिभार्गवोनेमइंद्रोजगती ॥

न्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबंधवे ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्र ह्मादयोदेवास्तत्रगच्छहुताशन ॥ इतिउत्सर्जनादिमंत्राः ॥ ॥ ॥ ॥

अथउपाकर्ममंत्राः ॥ दधिक्राव्णोंअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ ब्रह्मजज्ञानं प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ हिरण्यवर्णाःशुचयः पावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणोया तिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥ यासांदेवादिविकृण्वं तिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशंस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यता पःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जात वेदःपवित्रवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूंरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेवितत

१ दधिक्राव्णोगौतमोदधिक्रावानुष्टुप् ॥ २ यज्ञोपवीतमितिमंत्रस्यपरब्रह्मपरमात्मात्रिष्टुप् ॥ ३ ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् ॥

मंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागा त् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयंस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुना तु ॥ वातःप्राणेनैषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्त्रि भिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतंरसं ॥ सर्वंसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतंरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरंसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतंहितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतंहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजा पत्यंपवित्रं ॥ शतोद्यामंहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्व स्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ ॐ भूरग्निंचपृथिवींचमां च ॥ त्रींश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ॐ भुवोवायुंचांत

रिक्षंचमांचं ॥ त्रीँश्चल्लोकान्त्संवत्सरंचं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ॐ सुवं रादित्यंचदिवंचमांचं ॥ त्रीँश्चल्लोकान्त्संवत्सरंचं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ॐ भूर्भुवःसुवश्चंद्रमसंचदिशश्चमांचं ॥ त्रीँश्चल्लोकान्त्संवत्सरंचं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिर स्वद्ध्रुवासीद ॥ अथपर्जन्यसूक्तानि ॥ [1]अच्छावदतवसंगीर्भिराभिःस्तुहिपर्जन्यंनमसाविवास ॥ कनिक्रदद्वृषभोजी रदानूरेतोदधात्योषधीषुगर्भं ॥ विवृक्षान्हंत्युतहंतिरक्षसोविश्वंबिभायभुवनंमहावधात् ॥ उतानागाईषतेवृष्ण्यावतोयत्पर्जन्यःस्तनयन्हंतिदुष्कृतः ॥ रथीवकशयाश्वाँअभिक्षिपन्नाविर्दूतान्कृणुतेवर्ष्याँ३ऽअह ॥ दूरात्सिंहस्यस्तनथाउदीरतेयत्पर्जन्यःकृणुतेवर्ष्य१नभः ॥ प्रवातावांतिपतयंतिविद्युतउदोषधीर्जिहतेपिन्वतेस्वः ॥ इराविश्वस्मैभुवनायजायतेयत्पर्जन्यःपृथिवींरेतसावति ॥ यस्यव्रतेपृथिवीनंनमीतियस्यव्रतेशफवज्जर्भुरीति ॥ यस्यव्रतओषधीर्विश्वरूपाःसनःपर्जन्यमहिशर्मयच्छ ॥ १ ॥ दिवोनोवृष्टिंमरुतोररीध्वंप्रपिन्वतवृष्णोअश्वस्यधाराः ॥ अर्वाङेतेनस्तनयित्नुनेह्यपोनिषिंचन्नसुरःपितानः ॥ अभिक्रंदस्तनयगर्भमाधाउदन्वतापरिदीयारथेन ॥ दृतिंसुकर्षविषितंन्यंचंसमाभवंतूद्वतोनिपादाः ॥ महांतंकोशमुदचानिषिंचस्यंदंतांकुल्याविषिताःपुरस्तात् ॥ ऋतेनद्यावापृथिवीव्युंधिसुप्र

[1] अच्छावदेतिदशर्चस्यसूक्तस्यभौमोत्रिःपर्जन्यस्त्रिष्टुप्द्वितीयादितिस्रोजगत्योनवम्यनुष्टुप् ॥

पाणंभवत्वघ्न्याभ्यः ॥ यत्पर्जन्यकनिक्रदत्स्तनयन्हंसिदुष्कृतः ॥ प्रतीदंविश्वंमोदतेयत्किंचपृथिव्यामधि ॥ अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वान्यत्येतवाउ ॥ अजीजनओषधीर्भोजनायकमुतप्रजाभ्योविदोमनीषां ॥ २ ॥ [1]तिस्रोवाचःप्रवदज्योतिरग्रायाएतद्दुह्रेमधुदोघमूधः ॥ सवत्संकृण्वन्गर्भमोषधीनांसद्योजातोवृषभोरोरवीति ॥ योवर्धनओषधीनांयोअपांयोविश्वस्यजगतोदेवईशे ॥ सत्रिधातुशरणंशर्मयंसत्रिवर्तुज्योतिःस्वभिष्ट्य१स्मे ॥ स्तरीरुत्वद्भवतिसूतउत्वद्यथावशंतन्वंचक्रएषः ॥ पितुःपयःप्रतिगृभ्णातिमातातेनपितावर्धतेतेनपुत्रः ॥ यस्मिन्विश्वानिभुवनानितस्थुस्तिस्रोद्यावस्त्रेधासस्रुरापः ॥ त्रयःकोशासउपसेचनासोमध्वःश्चोतंत्यभितोविरप्शं ॥ इदंवचःपर्जन्यायस्वराजेहृदोअस्त्वंतरंतज्जुजोषत् ॥ मयोभुवोवृष्टयःसंत्वस्मेसुपिप्पलाओषधीर्देवगोपाः ॥ सरेतोधावृषभःशश्वतीनांतस्मिन्नात्माजगतस्तस्थुषश्च ॥ तन्मऋतंपातुशतशारदाययूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ [2]पर्जन्यायप्रगायतदिवस्पुत्रायमीढुषे ॥ सनोयवसमिच्छतु ॥ योगर्भमोषधीनांगवांकृणोत्यर्वतां ॥ पर्जन्यःपुरुषीणां ॥ तस्माइदास्येहविर्जुहोतामधुमत्तमं ॥ इळांनःसंयतंकरत् ॥ ४ ॥ [3]संवत्सरंशशयानाब्राह्मणाव्रतचारिणः ॥ वाचंपर्जन्यजिन्वितांप्रमंडूकाअवादिषुः ॥

[1] तिस्रोवाचइतिषळर्चस्यसूक्तस्यकुमारआग्नेयःपर्जन्यस्त्रिष्टुप् ॥ [2] पर्जन्यायेतितृचस्यसूक्तस्यकुमारःपर्जन्योगायत्री ॥ [3] संवत्सर-मितिदशर्चस्यसूक्तस्यवसिष्ठःपर्जन्यस्तुतिस्त्रिष्टुबाद्यानुष्टुप् ॥

दिव्याआपोअभियदेनमायंदतिंनशुष्कंसरसीशयानं ॥ गवामहनमायुर्वत्सिनीनांमंडूकानांवग्नुरत्रासमेति ॥ यदीमे
नाँउशतोअभ्यवर्षीत्तृष्यावतःप्रावृष्यागतायां ॥ अक्खलीकृत्यापितरंनपुत्रोअन्योअन्यमुपवदंतमेति । अन्योअन्य
मनुगृभ्णात्येनोरपांप्रसर्गेयदमंदिषातां ॥ मंडूकोयदभिवृष्टःकनिष्कन्पृश्निःसंपृंक्तेहरितेनवाचं ॥ यदेषामन्योअन्य
स्यवाचंशाक्तस्येववदतिशिक्षमाणः ॥ सर्वंतदेषांसमृधेवपर्वयत्सुवाचोवदथनाध्यप्सु ॥ ५ ॥ गोमायुरेकोअजमायुरे
कःपृश्निरेकोहरितएकएषां ॥ समानंनामबिभ्रतोविरूपाःपुरुत्रावाचंपिपिशुर्वदंतः ॥ ब्राह्मणासोअतिरात्रेनसोमेस
रोनपूर्णमभितोवदंतः ॥ संवत्सरस्यतदहःपरिष्ठयन्मंडूकाःप्रावृषीणंबभूव ॥ ब्राह्मणासःसोमिनोवाचमक्रतब्रह्मकृण्वं
तःपरिवत्सरीणं ॥ अध्वर्यवोघर्मिणःसिष्विदानाआविर्भवंतिगुह्यानकेचित् ॥ देवहितिंजुगुपुर्द्वादशस्यऋतुंनरोनप्र
मिनंत्येते ॥ संवत्सरेप्रावृष्यागतायांतप्ताघर्माअश्नुवतेविसर्गं ॥ गोमायुरदादजमायुरदात्पृश्निरदाद्धरितोनोवसूनि ॥
गवांमंडूकाददतःशतानिसहस्रसावेप्रतिरंतआयुः ॥ उपप्लवदमंडूकिवर्षमावदतादुरि ॥ मध्येह्रदस्यप्लवस्वनिगृह्यच
तुरःपरः ॥ ६ ॥ प्रदेवत्राब्रह्मणेगातुरेत्वपोअच्छामनसोनप्रयुक्ति ॥ महींमित्रस्यवरुणस्यधासिंपृथुज्रयसेरीरधासुवृ
क्तिं ॥ अध्वर्यवोहविष्मंतोहिभूताच्छापइतोशतीरुशंतः ॥ अवयाश्चष्टेअरुणःसुपर्णस्तमास्यध्वमूर्मिमद्यासुहस्ताः ॥

---

१ प्रदेवत्रेतिपंचदशर्चस्यसूक्तस्यऐलूषःकवषआपोऽपान्नपाद्वात्रिष्टुप् ॥



अध्वर्यवोपइतासमुद्रमपांनपातंहविषायजध्वं ॥ सवोददूर्मिमद्यासुपूतंतस्मैसोमंमधुमंतंसुनोत ॥ योअनिध्मोदीद
यदप्स्वं१ तर्यंविप्रासईळतेअध्वरेषु ॥ अपांनपान्मधुमतीरपोदायाभिरिंद्रोवावृधेवीर्याय ॥ याभिःसोमोमोदतेहर्षते
चकल्याणीभिर्युवतिभिर्नमर्यः ॥ ताअध्वर्योअपोअच्छापरेहियदासिंचाओषधीभिःपुनीतात् ॥ ७ ॥ एवेद्यूनेयुवत
योनमंतयदीमुशंनुशतीरेत्यच्छ ॥ संजानतेमनसासंचिकित्रेध्वर्यवोधिषणापश्चदेवीः ॥ योवोवृताभ्योअकृणोदुलो
कंयोवोमह्याअभिशस्तेरमुंचत् ॥ तस्माइंद्रायमधुमंतमूर्मिंदेवमादनंप्रहिणोतनापः ॥ प्रास्मैहिनोतमधुमंतमूर्मिंगर्भो
योवःसिंधवोमध्वउत्सः ॥ घृतपृष्ठमीड्यमध्वरेष्वापोरेवतीःशृणुताहवंमे ॥ तंसिंधवोमत्सरमिंद्रपानमूर्मिंप्रहेतयउभे
इयर्ति ॥ मदच्युतमौशानंनभोजांपरित्रितंतुंविचरंतमुत्सं ॥ आववृततीरधनुद्विधारागोषुयुधोननियवंचरंतीः ॥ ऋ
षेजनित्रीर्भुवनस्यपत्नीरपोवंदस्वसवृधःसयोनीः ॥ २ ॥ हिनोतानोअध्वरंदेवयज्याहिनोतब्रह्मसनयेधनानां ॥ ऋत
स्ययोगेविष्यध्वमूधःश्रुष्टीवरीर्भूतनास्मभ्यमापः ॥ आपोरेवतीःक्षयथाहिवस्वःक्रतुंचभद्रंबिभृथामृतंच ॥ रायश्चस्थ
स्वपत्यस्यपत्नीःसरस्वतीतद्गृणतेवयोधात् ॥ प्रतियदापोअदृश्रमायतीर्घृतंपयांसिबिभ्रतीर्मधूनि ॥ अध्वर्युभिर्मनसा
संविदानाइंद्रायसोमंसुषुतंभरंतीः ॥ एमाअग्मन्रेवतीर्जीवधन्याअध्वर्यवःसादयतासखायः ॥ निबर्हिषिधत्तनसो
म्यासोपांनप्त्रासंविदानासएनाः ॥ आग्मन्नापउशतीर्बर्हिरेदंन्यध्वरेअसदंदेवयंतीः ॥ अध्वर्यवःसुनुतेंद्रायसोममभू

दुवःसुशकांदेवयज्या ॥८॥ ॥ ऐ.ब्रा. ऋषयोवैसरस्वत्यांसत्रमासततेकवषमैलूषंसोमादनयन्दास्याःपुत्रःकितवोब्राह्म
णःकथंनोमध्येदीक्षिष्टेतितंबहिर्धन्वोदवहन्नत्रैनंपिपासाहंतुसरस्वत्याउदकंमापादितिसबहिर्धन्वोदूढःपिपासयावित्त
एतदपोनप्त्रीयमपश्यत्प्रदेवत्राब्रह्मणेगातुरेत्वितितेनापांप्रियंधामोपागच्छत्तमापोनूदायंस्तंसरस्वतीसमंतंपर्यधावत्त
स्माद्धाप्येतर्हिपरिसारकमित्याचक्षतेयदेनंसरस्वतीसमंतंपरिससारतेवाऋषयोब्रुवन्विदुर्वाइमंदेवाउपेमंह्वयामहाइति
तथेतितमुपाह्वयंततमुपहूयैतदपोनप्त्रीयमकुर्वतप्रदेवत्राब्रह्मणेगातुरेत्वितितेनापांप्रियंधामोपागच्छन्नुपदेवानामुपा
पांप्रियंधामगच्छत्युपदेवानांजयतिपरमंलोकंयएवंवेदयश्चैवंविद्वानेतदपोनप्त्रीयंकुरुतेतत्संततमनुब्रूयात्संततवर्षीह्प्र
जाभ्यःपर्जन्योभवतियत्रैवंविद्वानेतत्संततमन्वाहयदवग्राहमनुब्रूयाज्जीमूतवर्षीहप्रजाभ्यःपर्जन्यःस्यात्तस्मात्तत्संतत
मेवानूच्यंतस्यत्रिःप्रथमांसंततमन्वाहतेनैवतत्सर्वंसंततमनूक्तंभवति ॥ १ ॥ ॥ अथसौरसूक्तानि ॥ [1]उदुत्यंजातवे
दसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ अदृश्रमस्य
केतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥
प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्षसाभुरण्यन्तंजनाँअनु ॥ त्वं

१ उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वःसूर्योनवाद्यागायत्र्योंत्याश्चतस्रोनुष्टुभोंत्यस्तृचोरोगघ्नउपनिषदंत्योर्धर्चोद्विषघ्नः ॥



वरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामिमानोअक्तुभिः ॥ पश्यन्जन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेवसूर्य ॥
शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्प
श्यंतउत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॥ हृद्रोगंममसूर्यहरिमाणंच
नाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योविश्वे
नसहसासह ॥ द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ॥ २ ॥ [1]चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्रा
द्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् ॥ यत्रानरो
देवयंतोयुगानिवितन्वतेप्रतिभद्रायभद्रं ॥ भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ॥ नमस्यंतोदिवआपृ
ष्ठमस्थुःपरिद्यावापृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोर्विततंसंजभार ॥ यदेदयुक्तहरितःसध
स्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥ अनंतमन्यद्रुशदस्यपाजःकृ
ष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाउदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहंतामदितिः
सिंधुःपृथिवीउतद्यौः ॥ ३ ॥ [2]इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् ॥ एकंसद्विप्राबहुधावदंत्यग्निंय

१ चित्रंदेवानामितिषळर्चस्यसूक्तस्यकुत्सःसूर्यस्त्रिष्टुप् ॥ २ इंद्रंमित्रमितिद्वयोरौचथ्योदीर्घतमाःसूर्यस्त्रिष्टुप् ॥

मंमातरिश्वानमाहुः ॥ कृष्णंनियानंहरयःसुपर्णाअपोवसानादिवमुत्पतंति ॥ तआववृत्रन्त्सदनादृतस्यादिद्घृतेनपृथि वीव्युंद्यते ॥ [1]हंसःशुंचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअ द्रिजाऋतं ॥ [2]यत्त्वासूर्यस्वर्भानुस्तमसाविध्यदासुरः ॥ अक्षेत्रविद्यथामुग्धोभुवनान्यदीधयुः ॥ ४ ॥ [3]यदद्यसूर्यब्रवो नागाउद्यन्मित्रायवरुणायसत्यं ॥ वयंदेवत्रादितेस्यामतवप्रियासोअर्यमन्गृणंतः ॥ [4]उत्सूर्योबृहदर्चींष्यश्रेत्पुरुविश्वा जनिममानुषाणां ॥ समोदिवाददृशेरोचमानःक्रत्वाकृतःसुकृतःकर्तृभिर्भूत् ॥ ससूर्यप्रतिपुरोनउद्गाएभिःस्तोमेभिरेत शेभिरेवैः ॥ प्रनोमित्रायवरुणायवोचोनागसोअर्यम्णेअग्नयेच ॥ विनःसहस्रंशुरुधोरदंत्वृतावानोवरुणोमित्रोअग्निः ॥ यच्छंतुचंद्राउपमन्नोअर्कमानःकामंपूपुरंतुस्तवानाः ॥ [5]उद्वेतिसुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणाम् ॥ चक्षु र्मित्रस्यवरुणस्यदेवश्चर्मेववयःसमविव्यक्तमांसि ॥ उद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य ॥ समानंचक्रंपर्यावि वृत्सन्यदेतशोवहतिधूर्षुयुक्तः ॥ विभ्राजमानउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ॥ एषमेदेवःसविताचच्छंदयःस मानंनप्रमिनातिधाम ॥ ५ ॥ दिवोरुक्मउरुचक्षाउदेतिदूरेअर्थस्तरणिर्भ्राजमानः ॥ नूनंजनाःसूर्येणप्रसूताअयंनर्था

१ हंसःशुचिषदित्यस्यगौतमोवामदेवःसूर्योजगती ॥ २ यत्त्वासूर्येतिभौमोत्रिःसूर्यस्त्रिष्टुप् ॥ ३ यदद्यमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप् ॥ ४ उत्सूर्यइतितिसृणांमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप् ॥ ५ उद्वेतिसुभगइतिसार्धचतसृणांमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप् ॥

निकृणवन्नपांसि ॥ यत्राचक्रुरमृतागातुमस्मैश्येनोनदीयंनन्वेतिपाथः ॥ [1]उदुत्यदर्शतंवपुर्दिवएतिप्रतिह्वरे ॥ यदीमा शुर्वहतिदेवएतशोविश्वस्मैचक्षसेअरं ॥ शीर्ष्णःशीर्ष्णोजगतस्तस्थुषस्पतिंसमयाविश्वमारजः ॥ सप्तस्वसारःसुविता यसूर्यवहंतिहरितोरथे ॥ तच्चक्षुर्देवहितंशुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतं ॥ बण्महाँअसिसूर्यबळा दित्यमहाँअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाँअसि ॥ बट्सूर्यश्रवसामहाँअसिसत्रादेवमहाँअसि ॥ मह्ना देवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यं ॥ ६ ॥ [2]नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेव जातायकेतवेदिवस्पुत्रायसूर्यायशंसत ॥ सामासत्योक्तिःपरिपातुविश्वतोद्यावाचयत्रततनन्नहानिच ॥ विश्वमन्यन्नि विशतेयदेजतिविश्वाहापोविश्वाहोदेतिसूर्यः ॥ नतेअदेवःप्रदिवोनिवासतेयदेतशेभिःपतरैरथर्यसि ॥ प्राचीनमन्य दनुवर्ततेरजउदन्येनज्योतिषायासिसूर्य ॥ येनसूर्यज्योतिषाबाधसेतमोजगच्चविश्वमुदियर्षिभानुना ॥ तेनास्मद्वि श्वामनिरामनाहुतिमपामीवामपदुष्वप्न्यंसुव ॥ विश्वस्यहिप्रेषितोरक्षसिव्रतमहेळयन्नुच्चरसिस्वधाअनु ॥ यदद्यत्वासू र्योपब्रवामहैतन्नोदेवाअनुमंसीरतक्रतुं ॥ तन्नोद्यावापृथिवीतन्नआपइंद्रःशृण्वंतुमरुतोहवंवचः ॥ माशूनेभूमसूर्यस्यसं

१ उदुत्यदर्शतंवपुरितितृचस्यमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप्तृतीयापुरउष्णिक् ॥ २ नमोमित्रस्येतिद्वादशर्चस्यसूक्तस्यसौर्योभितपाः- सूर्योजगतीदशमीत्रिष्टुप् ॥

दृशिंभद्रंजीवंतोजरणामशीमहि ॥ ७ ॥ विश्वाहात्वासुमनसःसुचक्षसःप्रजावंतोअनमीवाअनागसः ॥ उद्यंतंत्वामित्रमहोदिवेदिवेज्योग्जीवाःप्रतिपश्येमसूर्य ॥ महिज्योतिर्बिभ्रतंत्वाविचक्षणभास्वंतंचक्षुषेचक्षुषेमयः ॥ आरोहंतंबृहतःपाजसस्परिवयंजीवाःप्रतिपश्येमसूर्य ॥ यस्यंतेविश्वाभुवनानिकेतुनाप्रचेरंतेनिचविशंतेअक्तुभिः ॥ अनागास्त्वेनहरिकेशसूर्याह्नाह्नानोवस्यसावस्यसोदिहि ॥ शंनोभवचक्षसाशंनोअह्नाशंभानुनाशंहिमाशंघृणेन ॥ यथाशमध्वन्छमसदुरोणेतत्सूर्यद्रविणंधेहिचित्रं ॥ अस्माकंदेवाउभयायजन्मनेशर्मयच्छतद्विपदेचतुष्पदे ॥ अदत्पिबदूर्जयमानमाशितंतदस्मेशंयोररपोदधातन ॥ यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेळनं ॥ अरावायोनोअभिदुच्छुनायतेतस्मिन्तदेनोवसवोनिधेतन ॥ ८ ॥ [1]सूर्योनोदिवस्पातुवातोअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यः ॥ जोषासवितर्यस्यतेहरःशतंसवाँअर्हति ॥ पाहिनोदिद्युतःपतंत्याः ॥ चक्षुर्नोदेवःसविताचक्षुर्नउतपर्वतः ॥ चक्षुर्धाताददधातुनः ॥ चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः ॥ संचेदंविचपश्येम ॥ सुसंदृशंत्वावयंप्रतिपश्येमसूर्य ॥ विपश्येमनृचक्षसः ॥ ९ ॥ [2]विभ्राड्बृहत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥ विभ्राड्बृहत्सुभृतंवाजसातमंधर्मन्दिवोधरुणेसत्यमर्पितं ॥ अमित्रहावृत्रहादस्युहंतमंज्योतिर्जज्ञेअसुरहासपत्नहा ॥ इदंश्रेष्ठंज्योतिषांज्योतिरुत्तमंविश्वजिद्धनजिदुच्यतेबृहत् ॥ विश्वभ्राड्भ्राजोमहिसूर्योदृशउरुपप्रथेसहओजोअच्युतं ॥ विभ्राजंज्योतिषास्व१रगच्छोरोचनंदिवः ॥ येनेमाविश्वाभुवनान्याभृताविश्वकर्मणाविश्वदेव्यावता ॥ १० ॥ [1]आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयन्त्स्वः ॥ अंतश्चरतिरोचनास्यप्राणादपानती ॥ व्यख्यन्महिषोदिवं ॥ त्रिंशद्धामविराजतिवाक्पतंगायधीयते ॥ प्रतिवस्तोरहद्युभिः ॥ ११ ॥ [2]ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः ॥ [3]सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ १२ ॥

॥ शांतिपाठः ॥ ॐ [4]आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरीतासउद्भिदः ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततां ॥ देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतुजीवसे ॥ तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं ॥ अर्यमणंवरुणंसोममश्विनास

---

१ सूर्योनइतिपंचर्चस्यसौर्यश्चक्षुःसूर्योगायत्री ॥ २ विभ्राड्बृहदितिचतुर्ऋचस्यसूक्तस्यसौर्योविभ्राट्सूर्योजगती अंत्याप्रस्तारपंक्तिः ॥

१ आयंगौरितितृचस्यसार्पराज्ञीसर्पागायत्री ॥ २ ऋतंचेतितृचस्यमाधुच्छंदसोघमर्षणोभाववृत्तमनुष्टुप् ॥ ३ सवितापश्चातादित्यस्यलुशोधानाकोविश्वेदेवास्त्रिष्टुप् ॥ ४ आनोभद्रा इतिदशर्चस्यसूक्तस्यगोतमोविश्वेदेवास्त्रिष्टुप्आद्यापंचमीसप्तमीचजगत्यःषष्ठीविराट्स्थाना ॥

रस्वतीनःसुभगामयस्करत् ॥ तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ १ ॥ स्वस्तिनऽइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निह ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाअदितिःपंचजनाऽअदितिर्जातमदितिर्जनित्वं ॥ २ ॥ [1]स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः ॥ स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयऽआदित्यासोभवंतुनः ॥ विश्वेदेवानोअद्यास्वस्तयेवैश्वानरोवसुरग्निःस्वस्तये ॥ देवाअवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः ॥ स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति ॥ स्वस्तिनऽइंद्रश्चाग्निश्चस्वस्तिनोऽअदितेकृधि ॥ स्वस्तिपंथामनुचरेमसूर्याचंद्रम

१ स्वस्तिनोमिमीतेतिपंचर्चस्यसूक्तस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुभोंत्येद्वेअनुष्टुभौ ॥



साविव ॥ पुनर्ददताघ्नताजानतासंगमेमहि ॥ ३ ॥ स्वस्त्ययनंतार्क्ष्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानां ॥ असुरघ्नमिंद्रसखंसमत्सुबृहद्यशोनावमिवारुहेम ॥ अंहोमुचमांगिरसंगयंचस्वस्त्यात्रेयंमनसाचतार्क्ष्यं ॥ प्रयतपाणिःशरणंप्रपद्येस्वस्तिसंबाधेष्वभयंनोअस्तु ॥ ४ ॥ [1]शंनइंद्राग्नीभवतामवोभिःशंनऽइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोःशंनइंद्रापूषणावाजसातौ ॥ शंनोभगःशमुनःशंसोअस्तुशंनःपुरंधिःशमुसंतुरायः ॥ शंनःसत्यस्यसुयमस्यशंसःशंनोअर्यमापुरुजातोअस्तु ॥ शंनोधाताशमुधर्तानोअस्तुशंनऽउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसुहवानिसंतु ॥ शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमित्रावरुणावश्विनाशं ॥ शंनःसुकृतांसुकृतानिसंतुशंनऽइषिरोअभिवातुवातः ॥ शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोऽअस्तु ॥ शंनऽओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ ५ ॥ शंनऽइंद्रोवसुभिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ शंनःसोमोभवतुब्रह्मशंनःशंनोग्रावाणःशमुसंतुयज्ञाः ॥ शंनःस्वरूणांमितयोभवंतुशंनःप्रस्व१ःशम्वस्तुवेदिः ॥ शंनःसूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशोभवंतु ॥ शंनःपर्वताध्रुवयोभवंतुशंनःसिंधवःशमुसंत्वापः ॥ शंनोअदितिर्भवतुव्रतेभिःशंनोभवंतुमरुतःस्वर्काः ॥ शंनोविष्णुःशमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥

१ शंनइंद्राग्नीतीपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥

शंनोदेवःसवितात्रायमाणःशंनोभवंतूषसोविभातीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यःशंनःक्षेत्रस्यपतिरस्तुशंभुः ॥ ६ ॥
शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याःपार्थिवाःशंनोअप्याः ॥
शंनःसत्यस्यपतयोभवंतुशंनोअर्वंतःशमुसंतुगावः ॥ शंनऋभवःसुकृतःसुहस्ताःशंनोभवंतुपितरोहवेषु ॥ शंनोऽअजऽ
एकपाद्देवोअस्तुशंनोहिर्बुध्न्य[1]ःशंसमुद्रः ॥ शंनोअपांनपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा ॥ आदित्यारुद्रावसवोजु
षंतेदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताउतयेयज्ञियासः ॥ येदेवानांयज्ञियायज्ञियानांम
नोर्यजत्राअमृताऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ७॥ शंवतीःपारयंत्येतेदंपृच्छंतिव
चोयुजा ॥ अभ्यारंतंयमाकेतुंयएवेदमितिब्रवन् ॥ भासाकेतुंपरिस्रुतंभारतीर्ब्रह्मवर्धनीः ॥ संजानानामहीमातायए
वेदमितिब्रवत् ॥ इंद्रस्तंकिंविभुंप्रभुंभानुनेयंसरस्वती ॥ येनसूर्यमरोचयद्येनेमेरोदसीउभे ॥ जुषस्वाग्नेअंगिरःकाण्वं
मेध्यातिथिं ॥ मात्वासोमस्यबर्बृहत्सुतस्यमधुमत्तमः ॥ त्वमग्नेअंगिरःशोचस्वदेववीतमः ॥ आशंतमशंतमाभिरभि
ष्टिभिःशांतिस्वस्तिमकुर्वत ॥ शंनःकनिक्रदद्देवःपर्जन्योअभिवर्षतु ॥ शंनोद्यावापृथिवीशंप्रजाभ्यःशंनएधिद्विपदेशं
चतुष्पदे ॥ ८ ॥ यंतंइंद्रभयामहेततोनोअभयंकृधि ॥ मघवञ्छग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि ॥ त्वंहिरा

१ यतइंद्रेतिषण्णांभर्गइंद्रःप्रगाथः ॥



धस्पतेराधसोमहःक्षयस्यासिविधतः ॥ तंत्वावयंमघवन्निंद्रगिर्वणःसुतावंतोहवामहे ॥ इंद्रस्पळुतवृत्रहापरस्पानोवरे
ण्यः ॥ सनोरक्षिषच्चरमंसमध्यमंसपश्चात्पातुनःपुरः॥९॥ त्वंनःपश्चादधरादुत्तरात्पुरइंद्रनिपाहिविश्वतः ॥ आरेअस्म
त्कृणुहिदैव्यंभयमारेहेतीरदेवीः ॥ अद्याद्याश्वःश्वइंद्रत्रास्वपरेचनः ॥ विश्वाचनोजरितृन्त्सत्पतेअहादिवानक्तंचर
क्षिषः ॥ प्रभंगीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकं ॥ उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥ १० ॥
भद्रंनोऽअपिवातयमनः[1] ॥ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां[2] ॥ संक्रंदनोनिमिषएकवीरःशतं
सेनाअजयत्साकमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधो
नरइषुहस्तेनवृष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधइंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यु[1]ग्रधन्वाप्र
तिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँऽअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्य
वितारथानां ॥ बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमा
तिष्ठगोवित् ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा ॥ इमंसजाताअनुवीरयध्वमिंद्रंसखायोअनुसंर

१ भद्रंनइतिमंत्रस्यैंद्रोविमदःप्राजापत्योवावासुक्रोवसुकृद्वाग्निरेकपदाविराद् ॥ २ आशुःशिशानइतित्रयोदशर्चस्यसूक्तस्यैंद्रोप्रतिरथइं
द्रस्त्रिष्टुप्चतुर्थ्याबृहस्पतिर्द्वादश्याअप्वांत्यायामरुतश्चवानुष्टुप् ॥

नेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ १ ॥ तृष्टामयाप्रथमंयातवेसजूःसुसर्त्वारसयाश्वेत्यात्या ॥ त्वंसिंधोकुभयागोमतींक्रुमुंमेहत्न्वासरथंयाभिरीयसे ॥ ऋजीत्येनीरुशतीमहित्वापरिज्रयांसिभरतेरजांसि ॥ अदब्धासिंधुरपसामपस्तमाश्वानचित्रावपुषीवदर्शता ॥ स्वश्वासिंधुःसुरथासुवासाहिरण्ययीसुकृतावाजिनीवती ॥ ऊर्णावतीयुवतिःसीलमावत्युताधिवस्तेसुभगामधुवृधं ॥ सुखंरथंयुयुजेसिंधुरश्विनंतेनवाजंसनिषदस्मिन्नाजौ ॥ महान्ह्यस्यमहिमापनस्यतेदब्धस्यस्वयशसोविरप्शिनः ॥ २ ॥ याःप्रवतोनिवतउद्वतउदन्वतीरनुदकाश्चयाः ॥ ताअस्मभ्यंपयसापिन्वमानाःशिवादेवीरशिपदाभवंतुसर्वानद्योअशिमिदाभवंतु ॥१॥

॥ अथरुद्रसूक्तानि ॥ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे ॥ यथानोअदितिःकरत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियं ॥ यथानोमित्रोवरुणोयथारुद्रश्चिकेतति ॥ यथाविश्वेसजोषसः ॥ गाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहे ॥ यःशुक्रइवसूर्योहिरण्यमिवरोचते ॥ श्रेष्ठोदेवानांवसुः ॥ १ ॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्योगवे ॥ अस्मेसोमश्रियमधिनिधेहिशतस्यनृणां ॥ महिश्रवस्तुविनृम्णं ॥ मानःसोमपरिबाधोमारातयोजुहुरंत ॥ आनइंदोवाजेभज ॥ यास्तेप्रजाअमृतस्यपरस्मिन्धामन्नृतस्य ॥ मूर्धानाभा

१ याःप्रवतोवसिष्ठोनद्यःशक्वरी ॥ २ कद्रुद्रायेतिनवर्चस्यसूक्तस्यघौरःकण्वोरुद्रोगायत्रीअंत्यानुष्टुप् ॥

सोमवेनआभूषंतीःसोमवेदः ॥ २ ॥ इमारुद्रायतवसे० ११ ऋचः ॥ आतेपितर्मरुतां० १५ ॥ इमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधान्ने ॥ अषाह्लायसहमानायवेधसेतिग्मायुधायभरताशृणोतुनः ॥ सहिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति ॥ अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासुनोभव ॥ यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः ॥ सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः ॥ मानोवधीरुद्रमापरादामातेभूमप्रसितौहीळितस्य ॥ आनोभजबर्हिषिजीवशंसेयूयंपात० ॥ ४ ॥ आवोराजानमध्वरस्यरुद्रंहोतारंसत्ययजंरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वं ॥ तमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य ॥ यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ भुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ ॥ बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः ॥ त्र्यंबकंयजामहे० ॥ इ० रु० सू० ॥ यएकइद्विदयतेवसुमर्तायदाशुषे ॥ ईशानोअ

१ इमारुद्रायतवसे०आतेपितरितिसूक्तेपूर्वंगतेइतिनात्रर्ष्यादिदत्तं ॥ २ इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रस्तिस्रोजगत्योंत्यात्रिष्टुप् ॥ ३ आवोराजानंवामदेवोरुद्रस्त्रिष्टुप् ॥ ४ तमुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् ॥ ५ भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् ॥ ६ यएकइदिति गौतमोराहूगणइंद्रउष्णिक् ॥

प्रतिष्कुतइंद्रोअंग ॥ [1]त्रिभिष्टंदेवसवितर्वर्षिष्ठैःसोमधामभिः ॥ अग्नेदक्षैःपुनीहिनः ॥ पुनंतुमांदेवजनाःपुनंतुवसवो
धिया ॥ विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमा ॥ प्रप्यायस्वप्रस्यंदस्वसोमविश्वेभिरंशुभिः ॥ देवेभ्यऽउत्तमंहविः॥
उपप्रियंपनिप्नतंयुवानमाहुतीवृधं ॥ अगन्मबिभ्रतोनमः ॥ अलाय्यस्यपरशुर्ननाशतमापवस्वदेवसोम ॥ आखुंचि
देवदेवसोम ॥ यःपावमानीरध्येत्यृषिभिःसंभृतंरसं ॥ सर्वंसपूतमश्नातिस्वदितंमातरिश्वना ॥ पावमानीर्योऽअध्ये
त्यृषिभिःसंभृतंरसं ॥ तस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदकं ॥ [2]उभयंशृणवच्चनइंद्रोअर्वागिदंवचः ॥ सत्राच्यामघवासो
मपीतयेधियाशविष्ठआगमत् ॥ [3]स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःसोमपाअभयंकरः ॥ [4]यातें
रुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ यज्जाग्रतो० ॥ ६ ॥ [5]इंद्रंत्वा
वृषभंवयंसुतेसोमेहवामहे ॥ सपाहिमध्वोअंधसः ॥ इंद्रंक्रतुविदंसुतंसोमंहर्यपुरुष्टुत ॥ पिबावृषस्वतातृपिं ॥ इंद्रप्र
णोधितावानंयज्ञंविश्वेभिर्देवेभिः ॥ तिरस्तवानविश्पते ॥ इंद्रसोमाःसुताइमेतवप्रयंतिसत्पते ॥ क्षयंचंद्रासइंदवः ॥



१ त्रिभिष्टंदेवेतिसप्तर्चस्यवसिष्ठआद्यानांत्रयाणामग्निस्ततश्चतुर्णांविश्वेदेवाआद्यागायत्रीद्वितीयानुष्टुप्ततोद्वेगायत्र्यौततएकापुरउष्णिक्
अंत्येद्वेअनुष्टुभौ ॥ २ उभयंशृणवच्चनप्रगाथोभर्गइंद्रोबृहती ॥ ३ स्वस्तिदाविशोभारद्वाजःशासइंद्रोनुष्टुप् ॥ ४ यातेरुद्रेतिकश्यपो
रुद्रःस्वराडनुष्टुप्॥ ५ इंद्रत्वेतिपंचानांविविचइंद्रोगायत्री ॥

दधिष्वाजठरेसुतंसोममिंद्रवरेण्यं ॥ तवद्युक्षासइंदवः ॥ [1]देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोह
स्ताभ्यां ॥ अश्विनोर्भैषज्येन ॥ तेजसेब्रह्मवर्चसायाभिषिंचामि ॥ १ ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहु
भ्यां ॥ पूष्णोहस्ताभ्यां ॥ सरस्वत्यैभैषज्येन ॥ वीर्यायान्नाद्यायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनो
र्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहु
भ्यांपूष्णोहस्ताभ्यां॰सरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्पतेस्त्वासाम्राज्येनाभिषिंचामि।
इत्यापस्तंबशाखीयामंत्राःभुवनेश्वर्याअभिषेके ॥ [2]अग्निःसप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्मनिष्ठां ॥ अग्नीरोदसीवि
चरत्समंजन्नग्निर्नारींवीरकुक्षिंपुरंधिं ॥ अग्नेरप्नसःसमिदस्तुभद्राग्निर्महीरोदसीऽआविवेश ॥ अग्निरेकंचोदयत्समत्स्व
ग्निर्वृत्राणिदयतेपुरूणि ॥ अग्निर्हत्यंजरतःकर्णमावाग्निरद्भ्योनिरदहज्जरूथं ॥ अग्निरत्रिंघर्मऽउरुष्यदंतरग्निर्नृमेधंप्रज
यासृजत्सं ॥ अग्निर्दाद्द्रविणंवीरपेशाऽअग्निर्ऋषिंयःसहस्रासनोति ॥ अग्निर्दिविहव्यमाततानाग्नेर्धामानिविभृतापुरु
त्रा ॥ अग्निमुक्थैर्ऋषयोविह्वयंतेग्निंनरोयामनिबाधितासः ॥ अग्निंवयोऽअंतरिक्षेपतंतोग्निःसहस्रापरियातिगोनां ॥
अग्निंविशऽईळतेमानुषीर्याअग्निंमनुषोनहुषोविजाताः ॥ अग्निर्गांधर्वींपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता ॥ अग्नये

१ देवस्यत्वेत्यस्यैतरेयःसविताश्विनौपूषाचयजुः ॥ २ अग्निःसप्तिमितिसप्तर्चस्यसूक्तस्याग्निःसौचीकोवैश्वानरोवाअग्निस्त्रिष्टुप्।

ब्रह्मंकृभवंस्ततक्षुरग्निंमहामंवोचामासुवृक्तिं ॥ अग्नेप्रावंजरितारंयविष्ठाग्नेमहिद्रविंणमायंजस्व ॥ १ ॥ [1]स्वंर्भानोरध यदिंद्रमायाअवोदिवोवर्तंमानाअवाहंन् ॥ गूह्ळंसूर्यंतमसापंव्रतेनतुरीयेणब्रह्मंणाविंददत्रिः ॥ [2]विष्णुर्योनिंकल्पयतुत्व ष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापंतिर्धातागर्भंदधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौ देवावाधंत्तांपुष्कंरस्रजा ॥ हिरण्ययींअरणीयंनिर्मंथंतोअश्विना ॥ तंतेगर्भंहवामहेदशमेमासिसूतंवे ॥ नेजंमेषपरा पतसुपुंत्रःपुनरापंत ॥ अस्यैमेंपुत्रकांमायैगर्भमाधेंहियःपुमान् ॥ यथेयंपृथिवीमह्युत्तानागर्भमादधे ॥ एवंतंगर्भमा धेंहिदशमेमासिसूतंवे ॥ विष्णोःश्रेष्ठेंनरूपेणास्यांनार्यींगवीन्यां ॥ पुमांसंपुत्रानाधेंहिदशमेमासिसूतंवे ॥ प्रजापते नत्व० ऋ० १ ॥ [3]अपंनःशोशुंचदघमग्नेंशुशुग्ध्यारयिं ॥ अपंनःशोशुंचदघं ॥ सुक्षेत्रियासुंगातुयावंसूयाचंयजामहे ॥ अपंनःशो० ॥ प्रयद्भंदिंष्ठएषांप्रास्माकांसश्चसूरयंः ॥ अपंनःशो० ॥ प्रयत्तेंअग्नेसूरयोजायेंमहिप्रतेंवयं ॥ अपंनः शो० ॥ प्रयदग्नेःसहंस्वतोविश्वतोयंतिभानवंः ॥ अपंनःशो० ॥ त्वंहिविंश्वतोमुखविश्वतंःपरिभूरसिं ॥ अपंनः शो० ॥ द्विषोंनोविश्वतोमुखातिंनावेवंपारय ॥ अपंनःशो० ॥ सनःसिंधुंमिवनावयातिंपर्षास्वस्तयें ॥ अपंनःशोशुं

१ स्वर्भानोरित्यस्यात्रिःस्वर्भानुस्त्रिष्टुप् ॥ २ विष्णुर्योनिमितितिसृणांत्वष्टागर्भकर्ताविष्णुर्वाप्राजापत्योगर्भार्थाशीरनुष्टुप् ॥ ३ अपनः शोशुचदित्यष्टर्चस्यसूक्तस्यकुत्सःशुचयोग्निर्गायत्री ॥



चदघं ॥ याःफलिनीर्या० ॥ [1]वधेनदस्युंप्रहिचातयंस्ववयंःकृण्वानस्तन्वं१स्वायैं ॥ पिपंर्षियत्संहसस्पुत्रदेवान्सोअंग्ने पाहिनृतमवाजेंअस्मान् ॥ वयंतेंअग्नउक्थैर्विंधेमवयंहव्यैःपांवकभद्रशोचे ॥ अस्मेरयिंविश्ववांरंसमिंन्वास्मेविश्वांनि द्रविंणानिधेहि ॥ अस्माकंमग्नेअध्वरंजुंषस्वसहंसःसूनोत्रिषधस्थहव्यं ॥ वयंदेवेषुंसुकृतंःस्यामशर्मंणानस्त्रिवरूंथेनपा हि ॥ विश्वांनिनोदुर्गहा० ऋ० २ ॥ [2]उदीर्ष्वातःपतिंवतीह्येंषाविश्वावंसुंनमंसागीर्भिरींळे ॥ अन्यामिंच्छपितृषदं व्यंक्तांसतेंभागोजनुषातस्यंविद्धि ॥ उदीर्ष्वातोंविश्वावसोनमंसेळामहेत्वा ॥ अन्यामिंच्छप्रफर्व्यं१संजायांपत्यांसृ ज ॥ [3]तांपूंषञ्छिवतंमामेरंयस्वयस्यांबीजंमनुष्या३वपंति ॥ यानंऊरूउंशतीविश्रयांतेयस्यांमुशंतंःप्रहरांमशेपं ॥ [4]योग र्भमोषंधीनांगवांकृणोत्यर्वंतां ॥ पर्जन्यंःपुरुषीणां ॥ [5]अहंगर्भंमदधामोषंधीष्वहंविश्वेंषुभुवंनेष्वंतः ॥ अहंप्रजाअंजन यंपृथिव्यामहंजनिंभ्योअपरीषुंपुत्रान् ॥ [6]अपंश्यंत्वामनंसाचेकिंतानंतपंसोजातंतपंसोविभूंतं ॥ इहप्रजामिहरयिंररा णःप्रजांयस्वप्रजयांपुत्रकाम ॥ अपंश्यंत्वामनंसादीध्यांनांस्वायांतनूऽऋत्व्येनाधंमानां ॥ उपमामुच्चायुंवतिर्बंभूयाः

१ वधेनदस्युमितिषण्णांवसुश्रुतोग्निस्त्रिष्टुप् ॥ २ उदीर्ष्वेतिद्वयोःसूर्यासावित्रीसूर्यासावित्रीआद्यात्रिष्टुबंत्यानुष्टुप् ॥ ३ तांपूषन्नित्य स्यसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् ॥ ४ योगर्भमित्यस्यवसिष्ठःपर्जन्योगायत्री ॥ ५ अहंगर्भमित्यस्यप्रजावान्प्राजापत्योभर्गइंद्रोवा त्रिष्टुप् ॥ ६ अपश्यमितितृचस्यसूक्तस्यप्राजापत्यःप्रजावानन्वृचंयजमानपत्नीहोत्राशिषस्त्रिष्टुप् ॥

प्रजायस्वप्रजयापुत्रकामे ॥ अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः ॥ अहंप्रजाअजनयंपृथिव्यामहंजनिभ्योअपरीषुपुत्रान् ॥ अपश्यंत्वामनसाचेकितानंतपसोजातंतपसोविभूतं ॥ इहप्रजामिहरयिंरराणःप्रजायस्वप्रजया पुत्रकाम ॥ अपश्यंत्वामनसादीध्यानांस्वयांतनूऽऋत्व्येनाधमानां ॥ उपमामुच्चायुवतिर्बभूयाःप्रजायस्वप्रजया पुत्रकामे ॥ अहंगर्भमदधाओषधीष्वहंविश्वेषुभुवनेष्वंतः ॥ अहंप्रजाअजनयंपृथिव्यामहंजनिभ्योअपरीषुपुत्रान् ॥ १ ॥ इतिगर्भाधानेमंत्राः ॥ ॥ अथेष्टिप्रायश्चित्तादौमंत्राः ॥ यमादित्याअंशुमाप्याययंतियमक्षितमक्षितयःपिबंति ॥ तेननोराजावरुणोबृहस्पतिराप्याययंतुभुवनस्यगोपाः ॥ अत्राहगोरमन्वतनामत्वष्टुरपीच्यं ॥ इत्थाचंद्रमसोगृहे ॥ इदंतएकंपरऊतएकंतृतीयेनज्योतिषासंविशस्व ॥ संवेशनेतन्वं१श्चारुरेधिप्रियोदेवानांपरमेजनित्रे ॥ उद्दीप्यस्वजातवदोपघ्नंनिर्ऋतिंमम ॥ पशूंश्चमह्यमावहजीवनंचदिशोदश ॥ मानोहिंसीज्जातवेदोगामश्वंपुरुषंजगत् ॥ अबिभ्रदग्नआगहिश्रियामापरिपातय ॥ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाः ॥ देवांजनमगन्यज्ञस्तस्यमाशीरवतुवर्धतां ॥ भूतिर्घृतेन मुंचतुयज्ञोयज्ञपतिमंहसः ॥ भूपतयेस्वाहा ॥ भुवनपतयेस्वाहा ॥ भूतानांपतयेस्वाहा ॥ यज्ञस्यत्वाप्रमयोन्मयाभिमयाप्रतिमया ॥ द्रप्सश्चस्कंदप्रथमांअनुद्यूनिमंचयोनिमनुयश्चपूर्वः ॥ समानंयोनिमनुसंचरंतंद्रप्संजुहोम्यनुसप्त

होत्राः ॥ भूमिर्भूमिमगान्मातामातरमप्यगात् ॥ भूयास्मपुत्रैःपशुभिर्योनोद्वेष्टिसभिद्यतामिति ॥ अभिन्नोघर्मोजीरदानुर्यतआर्तस्तदगन्पुनः ॥ इध्मोवेदिःपरिधयश्चसर्वेयज्ञस्यायुरनुसंतरंतु ॥ त्रयस्त्रिंशत्तंतवोयान्वितन्वतइमंयज्ञंस्वधयायेयजंते ॥ तेभिश्छिद्रंप्रतिदध्मोयजत्रस्वाहायज्ञोअप्येतुदेवान् ॥ ॥ अथपुंसवनादौमंत्राः ॥ प्रजावदाख्यंसूक्तं ॥ आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिं ॥ आवीरोजायतांपुत्रस्तेदशमास्यः ॥ करोमितेप्राजापत्यमागर्भोयोनिमेतुते ॥ अनूनःपूर्णोजायतामश्लोणोपिशाचधीतः ॥ पुमांस्तेपुत्रोनारितंपुमाननुजायतां ॥ तानिभद्राणिबीजान्यृषभाजनयंतुनौ ॥ यानिभद्राणिबीजान्यृषभाजनयंतिनः ॥ तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव ॥ कामःसमृध्यतांमह्यमपराजितमेवमे ॥ यंकामंकामयेदेवतंमेवायोसमर्धय ॥ अथजीवपुत्राख्यंसूक्तं ॥ अग्निरैतुप्रथमोदेवतानांसोस्यैप्रजांमुंचतुमृत्युपाशात् ॥ तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात् ॥ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योपस्थाजीवतामस्तुमातापौत्रमानंदमभिप्रबुध्यतामियं ॥ मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदंत्यःसंविशंतु ॥ मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यंतीप्रजांसुमनस्यमाना ॥ अप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघं ॥ शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुंचामिपाशं ॥ देवकृतंब्राह्मणंकल्पमानंतेनहन्मि

योनिषदः पिशाचान् ॥ क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमायुस्तवजीवंतुपुत्राः ॥ ॐ[1]धातादंदातुदाशुषेप्राचीं जीवातुमक्षितां ॥ वयंदेवस्यधीमहिसुमतिंवाजिनीवतः ॥ ॐधाताप्रजानामुतरायईशेधातेदंविश्वंभुवनंजजान ॥ धाताकृष्टीरनिमिषाभिचष्टेधात्रइद्धव्यंघृतवज्जुहोत ॥ [2]राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपः सूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यं ॥ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणा ॥ अथजातकर्मणिमंत्राः ॥ मेधांतेदेवःसविताम्मेधांदेवीसरस्वती ॥ मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजौ ॥ इंद्रश्रेष्ठानिद्रविणानि० १॥ [3]अस्मेप्रयंधिमघवन्नृजीषिन्निंद्ररायोविश्ववारस्यभूरेः ॥ अस्मेशतंशरदोजीवसेधाअस्मेवीरान्छश्वतइंद्रशिप्रिन् ॥ इमांकुमारोजरांधयतुदीर्घमायुःप्रजीवसे ॥ अस्यैस्तनौप्रयुंजानाआयुर्वर्चोयशोबलं ॥ अथवर्धापनविधौविशेषमंत्राः ॥ [4]इमंस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया ॥ भद्राहिनःप्रमतिरस्यसंसद्यग्नेसख्येमारिषामावयंतव ॥ यस्मैत्वमायजसेससाधत्यनर्वाक्षेतिदधतेसुवीर्यं ॥

---

१ धाताददातुदाशुषइतिमंत्रद्वयस्यहिरण्यगर्भोधातानुष्टुप् ॥ २ राकामहमितिद्वयोर्गृत्समदोराकाजगती ॥ ३ अस्मेप्रयंधिविश्वामित्रइंद्रस्त्रिष्टुप् ॥ २ इमंस्तोममितिषोळशर्चस्यसूक्तस्यआंगिरसः कुत्सोग्निः पूर्वोदेवास्त्रयः पादाविश्वेदेवास्तन्नोमित्रइत्यर्धर्चोमित्रावरुणादितिःसिंधुःपृथिवीद्युदेवत्योग्निर्वाजगत्यंत्येत्रिष्टुभौ ॥



सतूतावनैनंमश्नोत्यंहतिरग्नेस० ॥ शकेमत्वासमिधंसाधयाधियस्त्वेदेवाहविरदंत्याहुतं ॥ त्वमादित्यांआवहतान्ह्यु१श्मस्यग्नेसख्येमारिषामा० ॥ भरामेध्मंकृणवामाहवींषितेचितयंतःपर्वणापर्वणावयं ॥ जीवातवेप्रतरंसाधयाधियोग्नेस० ॥ विशांगोपाअस्यचरंतिजंतवोद्विपच्चयदुतचतुष्पदक्तुभिः ॥ चित्रःप्रकेतउषसोमहांअस्यग्नेस०॥१॥ त्वमध्वर्युरुतहोतासिपूर्व्यःप्रशास्तापोताजनुषापुरोहितः ॥ विश्वाविद्वांआर्त्विज्याधीरपुष्यस्यग्नेस० ॥ योविश्वतःसुप्रतीकःसदृङ्ङसिदूरेचित्संतळिदिवातिरोचसे ॥ रात्र्याश्चिदंधोअतिदेवपश्यस्यग्ने० ॥ पूर्वोदेवाभवतुसुन्वतोरथोस्माकंशंसोअभ्यस्तुदूढ्यः ॥ तदाजानीतोतपुष्यतावचोग्ने० ॥ वधैर्दुःशंसांअपदूढ्योजहिदूरेवायेअंतिवाकेचिदत्रिणः ॥ अथायज्ञायगृणतेसुगंकृध्यग्ने० ॥ यदयुक्थाअरुषारोहितारथेवातजूतावृषभस्येवतेरवः ॥ आदिन्वसिवनिनोधूमकेतुनाग्ने० ॥२॥ अधस्वनादुतबिभ्युःपतत्रिणोद्रप्सायत्तेयवसादोव्यस्थिरन् ॥ सुगंतत्तेतावकेभ्योरथेभ्योग्ने०॥ अयंमित्रस्यवरुणस्यधायसेवयातांमरुतांहेळोअद्भुतः ॥ मृळासुनोभूत्वेषांमनःपुनरग्ने० ॥ देवोदेवानामसिमित्रोअद्भुतोवसुर्वसूनामसिचारुरध्वरे ॥ शर्मन्त्स्यामतवसप्रथस्तमेग्नेस० ॥ तत्तेभद्रंयत्समिद्धस्स्वेदमेसोमाहुतोजरसेमृळयत्तमः ॥ दधासिरत्नंद्रविणंचदाशुषेग्नेस० ॥ यस्मैत्वंसुद्रविणोददाशोनागास्त्वमदितेसर्वताता ॥ यंभद्रेणशवसाचोदयासिप्रजाव

तारांधंसातेस्याम ॥ सत्वमंग्नेसौभगत्वस्यंविद्वान्स्माकमायुःप्रतिरेहदेव ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुः पृथिवीउतद्यौः ॥ जातवेदसेसुनवाम० ऋ० ॥ १ ॥ ॥ ॥ ॥ ॥

चूडाकर्ममंत्राः ॥ [1]अग्नआयूंषिपवसआसुवोर्जमिषंचनः ॥ आरेबांधस्वदुच्छुनां ॥ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहागयं ॥ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषं ॥ प्रजापतेनत्वदेतान्यन्योविश्वा० ॥ १ ॥ ॐउष्णेनवायउदकेनेहि ॥ अदितिःकेशान्वपत्वापउंदंतुवर्चसे ॥ ॐओषधेत्रायस्वैनं ॥ स्वधितेमैनंहिंसीः ॥ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासत् ॥ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनतआयुषेवपामिसुश्लोक्यायस्वस्तये ॥ येनभूयश्चरात्र्यांज्योक्चपश्यातिसूर्यं ॥ तेनतआयुषे० ॥ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिकेशान् ॥ शुंधिशिरोमास्यायुःप्रमोषीः ॥ शीतोष्णाभिरद्भिरबर्थंकुर्वाणोक्षण्वन्कुशलीकुरु ॥ ॥ ॥ ॥ ॥

अथोपनयनमंत्राः ॥ [2]युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृतानिविश्वऽऋतेनमित्रावरुणासचेथे ॥ [1]मित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्वीस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहं ॥ [2]यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥ [3]तत्संवितुर्वृणीमहेवयंदेवस्यभोजनं ॥ श्रेष्ठंसर्वधातमंतुरंभगस्यधीमहि ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांहस्तंगृह्णामि ॥ [4]युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंतः ॥ [5]अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ॥ तयात्वमग्नेवर्धस्वसमिधाब्रह्मणावयंस्वाहा ॥ [6]मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥ मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु ॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ यत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासं ॥ यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं ॥ यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासं ॥ [7]ममव्रतेहृदयंतेदधामिममचित्तमनुचित्तंतेअस्तु ॥ ममवाचमेकव्रतोजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यं ॥ [8]इयंदुरुक्तात्प

---

१ अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयःअग्निःपवमानोदेवतागायत्रीच्छंदः ॥ २ युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् ॥

---

१ मित्रस्यचक्षुरित्यस्यवामदेवोजिनंत्रिष्टुप् ॥ २ यज्ञोपवीतमितिमंत्रस्यपरब्रह्मपरमात्मात्रिष्टुप् ॥ ३ तत्सवितुरित्यस्यश्यावाश्वःसवितानुष्टुप् ॥ ४ युवासुवासाइत्यस्यकौशिकोविश्वामित्रोयूपस्त्रिष्टुप् ॥ ५ अग्नयेसमिधमित्यस्यहिरण्यगर्भोग्निर्बृहती ॥ ६ मयिमेधाभितिषण्णांहिरण्यगर्भःपूर्वेषांत्रयाणामग्नींद्रसूर्यादेवताउत्तरत्रयाणामग्निर्देवतागायत्रीच्छंदः ॥ ७ ममव्रतइत्यस्यप्रजापतिर्बृहस्पतिस्त्रिष्टुप् ॥ ८ इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलास्त्रिष्टुप् ॥

रिबाधमानाच्छर्मवरूथंपुनतीनआगात् ॥ प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं ॥ ऋतस्यगोप्त्री
तपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः ॥ सानःसमंतमनुपरेहिभद्रयाभर्तारस्तेमेखलेमारिषाम ॥ अदांतंदमयित्वा
मांमार्गेसंस्थापयन्त्स्वयं ॥ दंडःकरेस्थितोयस्मात्तस्माद्रक्षयतोभयं ॥ ॐ येयज्ञेनदक्षिणयासमक्ताइंद्रस्यसख्यममृ
तत्वमानश ॥ तेभ्योभद्रमंगिरसोवोऽअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ यउदाजन्पितरोगोमयंवस्वृतेनाभिंदन्परि
वत्सरेवलं ॥ दीर्घायुत्वमंगिरसोवोअस्तुप्रतिगृ० ॥ यऽऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि ॥ सुप्रजा
स्त्वमंगिरसोवोअस्तुप्र० ॥ अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोतन ॥ सुब्रह्मण्यमंगिरसोवोअस्तुप्र० ॥
विरूपासइदृषयस्तइद्गंभीरवेपसः ॥ तेअंगिरसःसूनवस्तेअग्नेःपरिजज्ञिरे ॥ १ ॥ येअग्नेःपरिजज्ञिरेविरूपासोदिवस्प
रि ॥ नवग्वोनुदशग्वोऽअंगिरस्तमःसचादेवेषुमंहते ॥ इंद्रेणयुजानिःसृजंतवाघतोव्रजंगोमंतमश्विनं ॥ सहस्रंमेदद
तोअष्टकर्ण्यः[1]श्रवोदेवेष्वक्रत ॥ प्रनूनंजायतामयंमनुस्तोक्मेवरोहतु ॥ यःसहस्रंशताश्वंसद्योदानायमंहते ॥ नतमं
श्नोतिकश्चनदिवइवसान्वारभं ॥ सावर्ण्यस्यदक्षिणाविसिंधुरिवपप्रथे ॥ उतदासापरिविषेस्मद्दिष्टीगोपरीणसा ॥

१ येयज्ञेनेत्येकादशर्चस्यसूक्तस्यनाभानेदिष्ठोविश्वेदेवा आद्यानांषण्णामंगिरसोवाअष्टम्यादिषुसावर्णेर्दानस्तुतिः आद्याश्चतस्रोजगत्यः पंचम्यष्टमीनवमीचानुष्टुभःषष्ठीबृहतीसप्तमीसतोबृहतीदशमीगायत्रीअंत्यात्रिष्टुप् ॥

यदुस्तुर्वश्चमामहे ॥ सहस्रदाग्रामणीर्मारिषन्मनुःसूर्येणास्ययतमानैतुदक्षिणा ॥ सावर्णेर्देवाःप्रतिरंत्वायुर्यस्मिन्नश्रां
ताअसनामवाजं ॥ २ ॥ परावतोयेदिधिषंतआप्यंमनुप्रीतासोजनिमाविवस्वतः ॥ ययातेर्येनहुष्यस्यबर्हिषिदेवाआ
संतेतेअधिब्रुवंतुनः ॥ विश्वाहिवोनमस्यानिवंद्यानामानिदेवाउतयज्ञियानिवः ॥ येस्थजाताअदितेरद्भ्यस्परियेपृथि
व्यास्तेमइहश्रुताहवं ॥ येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्त्स्वप्नसस्तां
ऽआदित्याँअनुमदास्वस्तये ॥ नृचक्षसोअनिमिषंतोऽअर्हणाबृहद्देवासोऽअमृतत्वमानशुः ॥ ज्योतीरथाऽअहिमाया
अनागसोदिवोवर्ष्माणंवसतेस्वस्तये ॥ सम्राजोयेसुवृधोयज्ञमाययुरपरिह्वृतादधिरेदिविक्षयं ॥ ताँऽआविवासनमसासु
वृक्तिभिर्महोऽआदित्याँऽअदितिंस्व० ॥ ३ ॥ कोवःस्तोमंराधतियंजुजोषथविश्वेदेवासोमनुषोयतिष्ठन ॥ कोवोध्वरं
तुविजाताअरंकरद्योनःपर्षदत्यंहःस्व० ॥ येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्निर्मनसासप्तहोतृभिः ॥ तआदित्याऽ
अभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये ॥ यईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्जगतश्चमंतवः ॥ तेनःकृतादकृ
तादेनसस्पर्यद्यादेवासःपिपृतास्व० ॥ भरेष्विंद्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनं ॥ अग्निंमित्रंवरुणंसातयेभगंद्या
वापृथिवीमरुतःस्व० ॥ सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं ॥ दैवींनावंस्वरित्रामनागसमस्रवंती

१ परावतइतिसप्तदशर्चस्यसूक्तस्यगयःप्लातोविश्वेदेवाः पंचदशीषोडश्योःपथ्यास्वस्तिर्जगत्यंत्यास्तिस्रस्त्रिष्टुभः ॥

मारुंहेमास्व० ॥ ४ ॥ विश्वैयजत्राऽअधिवोचतोतयेत्रायंध्वंनोदुरेवांयाऽअभिह्रुतः ॥ सत्ययावोदेवहूत्याहुवेमशृण्वतोदेवाऽअवंसेस्व० ॥ अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः ॥ आरेदेवाद्वेषोअस्मद्युयोतनोरुणः शर्मयच्छतास्व० ॥ अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि ॥ यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्व० ॥ यंदेवासोवथवाजसातौयंशूरसातामरुतोहितेधने ॥ प्रातर्यावाणंरथमिंद्रसानसिमरिष्यंतमारुंहेमास्व० ॥ स्वस्तिनःपथ्यासुधन्वसुस्वस्त्य१प्सुवृजनेस्वर्वति ॥ स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन ॥ स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति ॥ सानोअमासोऽअरणेनिपातुस्वावेशाभवतुदेवगोपा ॥ एवाप्लतेः सूनुरवीवृधद्वोविश्वऽआदित्याऽअदितेमनीषी ॥ ईशानासोनरोअमर्त्येनास्ताविजनोदिव्योगयेन ॥ ५ ॥ बृहस्पतेप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाः ॥ यदेषांश्रेष्ठंयदरिप्रमासीत्प्रेणातदेषांनिहितंगुहाविः ॥ सक्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत ॥ अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि ॥ यज्ञेनवाचःपदवीयमायंतामन्वविंदन्नृषिषुप्रविष्टां ॥ तामाभृत्याव्यदधुःपुरुत्रातांसप्तरेभाअभिसंनवंते ॥ उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनां ॥ उतोत्वस्मैतन्वं१विसस्रेजायेवपत्यउशतीसुवासाः ॥ उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वं

१ बृहस्पतइत्येकादशर्चस्यसूक्तस्यांगिरसोबृहस्पतिर्ज्ञानंत्रिष्टुप्नवमीजगती ॥

त्यपिवाजिनेषु ॥ अधेन्वाचरतिमाययैषवाचंशुश्रुवाँऽअफलामपुष्पां ॥ १ ॥ यस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोअस्ति ॥ यदींशृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथां ॥ अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमाबभूवुः ॥ आदघ्नासऽउपकक्षासऽउत्वेह्रदाऽइवस्नात्वाऽउत्वेददृश्रे ॥ हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजंतेसखायः ॥ अत्राहत्वंविजहुर्वेद्याभिरोहब्रह्माणोविचरंत्युत्वे ॥ इमेयेनार्वाङ्नपरश्चरंतिनब्राह्मणासोनसुतेकरासः ॥ तऽएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वतेऽअप्रजज्ञयः ॥ सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः ॥ किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्करीषु ॥ ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतऽउत्वः ॥ २ ॥ [1]तेवदन्प्रथमाब्रह्मकिल्बिषेकूपारःसलिलोमातरिश्वा ॥ वीळुहरास्तपऽउग्रोमयोभूरापोदेवीःप्रथमजाऽऋतेन ॥ सोमोराजाप्रथमोब्रह्मजायांपुनःप्रायच्छदहृणीयमानः ॥ अन्वर्तितावरुणोमित्रऽआसीदग्निर्होताहस्तगृह्यानिनाय ॥ हस्तेनैवग्राह्यऽआधिरस्याब्रह्मजायेयमितिचेदवोचन् ॥ नदूतायप्रह्येतस्थऽएषातथाराष्ट्रंगुपितंक्षत्रियस्य ॥ देवाऽएतस्यामवदंतपूर्वेसप्तऽऋषयस्तपसेयेनिषेदुः ॥ भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन् ॥ ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमंगं ॥ तेनजायामन्वविंदद्बृह

१ तेवदन्नितिसप्तदशर्चस्यसूक्तस्यब्रह्मजायाजुहूर्ब्राह्मऊर्ध्वनाभोवाविश्वेदेवास्त्रिष्टुबंत्येद्वेअनुष्टुभौ ॥

स्पतिःसोमेननीतांजुह्व१नदेवाः ॥ पुनर्वैदेवाऽअददुःपुनर्मनुष्याऽउत ॥ राजानःसत्यंकृण्वानाब्रह्मजायांपुनर्ददुः ॥ पुनर्दायब्रह्मजायांकृत्वीदेवैर्निकिल्बिषं ॥ ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासते ॥ १ ॥ [1]मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ प्रसमित्रमर्तोऽअस्तुप्रयस्वान्यस्तऽआदित्यशिक्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमंहोऽअश्नोत्यंतितोनदूरात् ॥ अनमीवासइळयामदंतोमितज्ञवोवरिमन्नापृथिव्याः ॥ आदित्यस्यव्रतमुपक्षियंतोवयंमित्रस्यसुमतौस्याम ॥ अयंमित्रोनमस्यःसुशेवोराजासुक्षत्रोऽअजनिष्टवेधाः ॥ तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ महाँऽआदित्योनमसोपसद्योयातयज्जनोगृणतेसुशेवः ॥ तस्माऽएतत्पन्यतमायजुष्टमग्नौमित्रायहविराजुहोत ॥ १ ॥ मित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रवस्तमं ॥ अभियोमहिनादिवंमित्रोबभूवसप्रथाः ॥ अभिश्रवोभिःपृथिवीं ॥ मित्रायपंचयेमिरेजनाऽअभिष्टिशवसे ॥ सदेवान्विश्वान्बिभर्ति ॥ मित्रोदेवेष्वायुषुजनायवृक्तबर्हिषे ॥ इषऽइष्टव्रताऽअकः ॥ २ ॥ ॐसुश्रवःसुश्रवाअसियथात्वंसुश्रवःसुश्रवाअस्येवंमांसुश्रवःसौश्रवसंकुरु ॥ यथात्वंदेवानांयज्ञस्यनिधिपोस्येवमहंमनुष्याणांवेदस्यनिधिपोभूयासं ॥ ॥ अथमेधाकरंसूक्तं ॥ ॐमेधामह्यमंगिरसोमेधांसप्तऋषयोददुः ॥ मेधामिंद्रश्चाग्नि

[1] मित्रोजनानितिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रोमित्रस्त्रिष्टुप्अंत्याश्चतस्रोगायत्र्यः ॥

श्चमेधांधातादधातुते ॥ मेधांतेवरुणोराजामेधांदेवीसरस्वती ॥ मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ यामेधाअप्सरस्सुगंधर्वेषुचयन्मनः ॥ दैवीयामानुषीमेधासामामाविशतादिमाम् ॥ यन्मेनोक्तंतद्रमतांशकेयंयदनुब्रुवे ॥ निशामतन्निशामयिमयिव्रतंसहव्रतेषुभूयासंब्रह्मणासंगमेमहि ॥ शरीरंमेविचक्षणंवाङ्मेमधुमद्दुहा ॥ अवृद्धमहमसौसूर्योब्रह्मणानीस्थःश्रुतंमेमाप्रहासीः ॥ मेधांदेवींमनसारेजमानांगंधर्वजुष्टांप्रतिनोजुषस्व ॥ मह्यंमेधांवदमह्यंश्रियंवदमेधावीभूयासमजराजरिष्णुः ॥ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषं ॥ यांमेधांदेवगणाःपितरश्चोपासते ॥ तयामामेधयामेमेधाविनंकुरु ॥ मेधाव्य१हंसुमनाःसुप्रतीकःश्रद्धामनाःसत्यमतिःसुशेवः ॥ महायशाधारयिष्णुःप्रवक्ताभूयासमस्यैस्वधयाप्रयोगे ॥ १ ॥ [1]अर्चतप्रार्चतप्रियमेधासोअर्चत ॥ अर्चंतुपुत्रकाउतपुरंनधृष्ण्वर्चत ॥ [2]अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ॥ अभिचंद्राभर्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ [3]वेदिषदेप्रियधामायसुद्युतेधासिमिवप्रभरायोनिमग्नये ॥ वस्त्रेणेववासयामन्मनाशुचिंज्योतीरथंशुक्रवर्णंतमोहनं ॥ [4]सतुवस्त्राण्यधपेशनानिवसानोअग्निर्नाभापृथिव्याः ॥ अरुषोजातःपदइळायाःपुरोहितोराजन्यक्षीहदेवान् ॥ चरणं

[1] अर्चतप्रार्चतेतिप्रियमेधइंद्रोनुष्टुप् ॥ [2] अभिवस्त्रेत्यांगिरसःकुत्सःपवमानसोमस्त्रिष्टुप् ॥ [3] वेदिषदइत्यस्यौचथ्योदीर्घतमाअग्निर्जगती ॥ [4] सतुवस्त्रेत्यास्यत्रितोग्निस्त्रिष्टुप् ॥

पवित्रंविततंपुराणंयेनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेणशुद्धेनपूताअतिपाप्मानमरातिंतरेम ॥ लोकस्यद्वारमर्चिवत्पवित्रं ॥ ज्योतिष्मद्भ्राजमानंमहस्वत् ॥ चरणंनोलोकेसुधितांददातु ॥ [1]श्रावयेदस्यकर्णावाजयध्यैजुष्टामनुप्रदिशंमंदयध्यै ॥ उद्वावृषाणोराधसेतुविष्मान्करन्नऽइंद्रःसुतीर्थाभयंच ॥ अच्छायोगंतानाधमानमूतीऽइत्थाविप्रंहवमानंगृणंतं ॥ उपत्मनिदधानोधुर्याऽ३शून्त्सहस्राणिशतानिवज्रबाहुः ॥ त्वोतासोमघवन्निंद्रविप्रावयंतेस्यामसूरयोगृणंतः ॥ भेजानासोबृहद्दिवस्यरायऽआकाय्यस्यदावनेपुरुक्षोः ॥ [2]तंवोधियानव्यस्याशविष्ठंप्रत्नंप्रत्नवत्परितंसयध्यै ॥ सनोवक्षदनिमानःसुब्रह्मेंद्रोविश्वान्यतिदुर्गहाणि ॥ [3]तंवोधियापरमयापुराजामजरमिंद्रमभ्यनूष्यर्कैः ॥ ब्रह्माचगिरोदधिरेसमस्मिन्महांश्चस्तोमोअधिवर्धदिंद्रे ॥ [4]तद्वोदिवोदुहितरोविभातीरुपब्रुवउषसोयज्ञकेतुः ॥ वयंस्यामयशसोजनेषुतद्द्यौश्चधत्तांपृथिवीचदेवी ॥ ॥ अथसमावर्तनेविशेषमंत्राः ॥ ॐ अश्मनस्तेजोसिचक्षुर्मेपाहि ॥ ॐ अश्मनस्तेजोसिश्रोत्रंमेपाहि ॥ ॐ अनार्तास्यनार्तोहंभूयासम् ॥ ॐ देवानांप्रतिष्ठेस्थःसर्वतोमापातं ॥ ॐ दिवश्छद्मासि ॥ ॐ वेणुरसिवानस्पत्योसिसर्वतोमापाहि ॥ ॐ [1]आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं ॥ इदंहिरण्यंवर्चस्वजैत्रायाविशतादिमाम् ॥ उच्चैर्वाजिपृतनाषाट्सभासाहंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्समाहिताः ॥ शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ ॥ तेनमांसूर्यत्वचमकरंपूरुषुप्रियं ॥ सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज ॥ अग्नेःप्रजातंपरियद्धिरण्यममृतंयज्ञेअधिमर्त्येषु ॥ यएनद्वेदसइदेनमर्हतिजरामृत्युर्भवतियोबिभर्ति ॥ यद्वेदराजावरुणोयदुदेवीसरस्वती ॥ इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे ॥ नतद्रक्षांसिनपिशाचास्तरंतिदेवानामोजःप्रथमजंह्येऽ३तत् ॥ योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ यदाबध्नन्दाक्षायणाहिरण्यंशतानीकायसुमनस्यमाना ॥ तन्नआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत् ॥ घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदरोहमांमहतेसौभगाय ॥ प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु ॥ प्रियंविश्वेषुगोप्त्वेषुमयिधेहिरुचारुचं ॥ अग्निर्येनविराजतिसूर्योयेनविराजति ॥ विराज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधंकुरु ॥ ॐ [2]स्मृतंचमेअस्मृतंचमेतन्मउभयव्रतं ॥ निंदाचमे

१ श्रावयेदस्येतितृचस्यवामदेवइंद्रस्त्रिष्टुप् ॥ २ तंवोधियेत्यस्यभरद्वाजइंद्रस्त्रिष्टुप् ॥ ३ तंवोधियेत्यस्यभरद्वाजइंद्रस्त्रिष्टुप् ॥ ४ तद्वोदिवइत्यस्यवामदेवउषास्त्रिष्टुप् ॥

१ आयुष्यमितिसूक्तस्यसनकसनंदनसनातनादयोहिरण्यमाता आद्याश्चतस्रोनुष्टुभःपंचमीत्रिष्टुप्षष्ठ्यनुष्टुप्सप्तम्यतिशक्करीअष्टमीनवम्यौत्रिष्टुभौदशम्यनुष्टुबेकादशीपंक्तिः ॥ २ स्मृतंचमइत्यादिमंत्राणामग्निर्देवताअष्टिछंदः ॥

अनिंदाचमेतन्मउभयव्रतं ॥ विद्याचमेअविद्याचमेतन्मउभयव्रतं ॥ श्रद्धाचमेअश्रद्धाचमेतन्मउभयव्रतं ॥ प्रज्ञाचमे अप्रज्ञाचमेतन्मउ० ॥ इष्टंचमेअनिष्टंचमेतन्मउ० ॥ दत्तंचमेअदत्तंचमेतन्मउ० ॥ अधीतंचमेअनधीतंचमेतन्म० ॥ कृतंचमेअकृतंचमेतन्म० ॥ सत्यंचमेअसत्यंचमेतन्म० ॥ श्रुतंचमेअश्रुतंचमेतन्म० ॥ व्रतंचमेअव्रतंचमेतन्मउभ यव्रतं ॥ यदग्नेसेंद्रस्यसप्रजापतिकस्यसऋषिकस्यसऋषिराजन्यस्यसपितृकस्यसपितृराजन्यस्यसमनुष्यस्यसमनुष्यरा जन्यस्यसाकाशस्यसातीकाशस्यसानूकाशस्यसप्रतीकाशस्यसदेवमनुष्यस्यसगंधर्वाप्सरस्कस्यसहारण्यैश्चपशुभिर्ग्रा म्यैश्चयन्मआत्मनआत्मनिव्रतंतन्मेसर्वव्रतमिदमहमग्नेसर्वव्रतोभवामिस्वाहा ॥ [1]ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधाना स्तन्वंपुषेम ॥ मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम ॥ ममदेवाविहवेसंतुसर्वइंद्रवंतोमरुतोविष्णुरग्निः ॥ ममान्तरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मिन् ॥ मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः ॥ दै व्याहोतारोवनुषंतपूर्वेरिष्टाःस्यामतन्वासुवीराः ॥ मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसोमेअस्तु ॥ एनोमानि गांकतमच्चनाहंविश्वेदेवासोअधिवोचतानः ॥ देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासइहवीरयध्वं ॥ माहास्महिप्रज यामातनूभिर्मारधामद्विषतेसोमराजन् ॥ १ ॥ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिनस्त्वं ॥ प्रत्यंचोयंतु

१ ममाग्नेवर्चइतिदशर्चस्यसूक्तस्यविहव्योविश्वेदेवास्त्रिष्टुप्अंत्याजगती ॥



निगुतःपुनस्तेअमैषांचित्तंप्रबुधांविनेशत् ॥ धाताधातॄणांभुवनस्ययस्पतिर्देवंत्रातारमभिमातिषाहं ॥ इमंयज्ञमश्वि नोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात् ॥ उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः ॥ सनःप्रजायैहर्य श्वमृळयेंद्रमानोरीरिषोमापरादाः ॥ येनःसपत्नाअपतेभवंत्विंद्राग्निभ्यामवबाधामहेतान् ॥ वसवोरुद्राआदित्याउ परिस्पृशंमोग्रंचेत्तारमधिराजमक्रन् ॥ अर्वांचमिंद्रममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः ॥ इमंनोयज्ञंविहवेजुष स्वास्यकुर्मोहरिवोमेदिनंत्वा ॥ १० ॥ इतिदशमंत्राः ॥ ॥ अथदेवपूजादौ ॥ [1]येभ्योमातामधुमत्पिन्वतेपयःपीयू षंद्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँआदित्याँअनुमदास्वस्तये ॥ [2]एवापित्रेविश्वदेवायवृष्णेयज्ञै र्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवन्तोवयंस्यामपतयोरयीणाम् ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं भवावाजस्यसंगथे ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ [3]घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ [4]मधुवाता ऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तुनःपिता ॥

१ येभ्योमातेत्यस्यगयःप्लातोविश्वेदेवाजगती ॥ २ एवापित्रइत्यस्यवामदेवोबृहस्पतिस्त्रिष्टुप् ॥ ३ घृतंमिमिक्षइत्यस्यगृत्समदआप्रियो तनूनपात्रिष्टुप् ॥ ४ मधुवाताइतितृचस्यराहूगणोगौतमोविश्वेदेवागायत्री ॥

मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ [1]स्वादुःपवस्वदिव्यायजन्मनेस्वादुरिंद्रायसुहवीतुना
म्ने ॥ स्वादुर्मित्रायवरुणायवायवेबृहस्पतयेमधुमाँअदाभ्यः ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्या
मग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्याय ॥ [2]तदस्तुमित्रावरुणातदग्नेशंयोरस्म
भ्यमिदमस्तुशस्तम् ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावा
चाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ नर्यप्रजांमेगोपाय ॥
अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठिताम् ॥ ॥ अथदेवेसंज्ञामंत्राः ॥ ॐगणानांत्वा० ॥१॥
[3]देवींवाचमजनयंतदेवास्तांविश्वरूपाःपशवोवदंति ॥ सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ २ ॥ [4]नमो
महद्भ्योनमोऽअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः ॥ यजामदेवान्यदिशक्नवाममाज्यायसःशंसमावृक्षिदेवाः ॥१॥
ममत्तुनःपरिज्मावसर्हाममत्तुवातोअपांवृषण्वान् ॥ शिशीतमिंद्रापर्वतायुवन्नस्तन्नोविश्वेवरिवस्यंतुदेवाः ॥ २ ॥ कु
थातेअग्नेशुचयंतआयोर्ददाशुर्वाजेभिराशुषाणाः ॥ उभेयत्तोकेतनयेदधानाऋतस्यसामन्रणयंतदेवाः ॥ ३ ॥ यज्ञेन

१ स्वादुःपवस्वेत्यस्यभार्गवोवेनःपवमानसोमोजगती ॥ २ तदस्तुमित्रेत्यात्रेयोऽप्रतिरथोविश्वेदेवास्त्रिष्टुप् ॥ ३ देवींवाचमित्यस्यभार्गवो वाक्त्रिष्टुप् ॥ ४ नमोमहद्भ्यइत्यस्यशुनःशेपोविश्वेदेवास्त्रिष्टुप् ॥

यज्ञमयजंतदेवा० ॥ ४ ॥ पराशुभ्राअयासोयव्यासाधारण्येवमरुतोमिमिक्षुः ॥ नरोदसीअपनुदंतघोराजुषंतवृधंस
ख्यायदेवाः ॥ ५ ॥ त्वेरायइंद्रतोशतमाःप्रणेतारःकस्यचिदृतायोः ॥ तेषुणोमरुतोमृळयंतुयेस्मापुरागातूयंतीवदेवाः
॥ ६ ॥ उभाशंसानर्यामामविष्टामुभेमामूतीअवसासचेताम् ॥ भूरिंचिदर्यःसुदास्तरायेषामदंतइषयेमदेवाः ॥ ७ ॥
उतनईमरुतोवृद्धसेनाःस्मद्रोदसीसमनसःसदंतु ॥ पृषदश्वासोवनयोनरथारिशादसोमित्रयुजोनदेवाः ॥ ८ ॥ तवं
स्यामपुरुवीरस्यशर्मन्नुरुशंसस्यवरुणप्रणेतः ॥ यूयंनःपुत्राअदितेरदब्धाअभिक्षमध्वंयुज्यायदेवाः ॥ ९ ॥ दिवश्चिदा
तेरुचयंतरोकाउषोविभातीरनुभासिपूर्वीः ॥ अपोयदग्नउशधग्वनेषुहोतुर्मंद्रस्यपनयंतदेवाः ॥ १० ॥ शंसामहामिं
द्रंयस्मिन्विश्वाआकृष्टयःसोमपाःकाममव्यन् ॥ यंसुक्रतुंधिषणेविभ्वतष्टंघनंवृत्राणांजनयंतदेवाः ॥ ११ ॥ त्रिरुत्त
मादूणशारोचनानित्रयोराजंत्यसुरस्यवीराः ॥ ऋतावानइषिरादूळभासस्त्रिरादिवोविदथेसंतुदेवाः ॥ १२ ॥ नापा
भूतनवोतीतृषामानिःशस्ताऋभवोयज्ञेअस्मिन् ॥ समिंद्रेणमदथसंमरुद्भिःसंराजभीरत्नधेयायदेवाः ॥ १३ ॥ अप्र
तीतोजयतिसंधनानिप्रतिजन्यान्युतयासजन्या ॥ अवस्यवेयोवरिवःकृणोतिब्रह्मणेराजातमवंतिदेवाः ॥ १४ ॥ को
वस्त्रातावसवःकोवरूताद्यावाभूमीअदितेत्रासीथांनः ॥ सहीयसोवरुणमित्रमर्तात्कोवोध्वरेवरिवोधातिदेवाः ॥१५॥
त्वमपोयदवेतुर्वशायारमयःसुदुघाःपारइंद्र ॥ उग्रमयातमवहोहकुत्संसंहयद्वामुशनारंतदेवाः ॥ १६ ॥ मूर्धानंदि

वोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ १७ ॥ ना
भिंयज्ञानांसदनंरयीणांमहामाहावमभिसंनवंत ॥ वैश्वानरंरथ्यमध्वराणांयज्ञस्यकेतुंजनयंतदेवाः ॥ १८ ॥ तेनोरा
योद्युमतोवाजवतोदातारोभूतनृवतःपुरुक्षोः ॥ दशस्यंतोदिव्याःपार्थिवासोगोजाताअप्यामृळताचदेवाः ॥ १९ ॥
येकेचज्मामहिनोअहिमायादिवोजज्ञिरेअपांसधस्थे ॥ तेअस्मभ्यमिषयेविश्वमायुःक्षपउस्रावरिवस्यंतुदेवाः ॥ २० ॥
अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्माँअवंतुदेवाः ॥ २१ ॥
परिप्रधन्वेंद्रायसोमस्वादुर्मित्रायपूष्णेभगाय ॥ इंद्रस्तेसोमसुतस्यपेयाःक्रत्वेदक्षायविश्वेचदेवाः ॥ २२ ॥ प्रयाजा
न्मेअनुयाजाँश्चकेवलानूर्जस्वंतंहविषोदत्तभागं ॥ घृतंचापांपुरुषंचौषधीनामग्नेश्चदीर्घमायुरस्तुदेवाः ॥ २३ ॥ ऐभि
र्ददेवृष्ण्यापौँस्यानियेभिरौक्षद्वृत्रहत्यायवज्री ॥ येकर्मणःक्रियमाणस्यमह्नऋतेकर्ममुदजायंतदेवाः ॥ २४ ॥ अनृक्ष
राऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ २५ ॥ गृ
भ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ २६ ॥
समस्मिञ्जायमानआसतग्नाउतेमवर्धन्नद्यँ१ःस्वगूर्ताः ॥ महेयत्त्वापुरूरवोरणायावर्धयन्दस्युहत्यायदेवाः ॥ २७ ॥
ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमंगं ॥ तेनजायामन्वविंदद्बृहस्पतिःसोमेननीतांजुह्वं१नदेवाः ॥ २८ ॥



सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ॥ अस्यहोतुःप्रदिश्यृतस्यवाचिस्वाहाकृतंहविरदंतुदेवाः ॥ २९ ॥
इदंतेपात्रंसनवित्तमिंद्रपिबासोममेनाशतक्रतो ॥ पूर्णआहावोमदिरस्यमध्वोयंविश्वइदंभिहर्यतिदेवाः ॥ ३० ॥ स
क्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत ॥ अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि ॥१॥
प्रणोदेवीसरस्वतीवाजेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु ॥२॥ ॥ देवानांपृथग्गायत्र्यः ॥ तत्पुरुषायविद्महेमहा
देवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ३ ॥ तत्पुरुषायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ ४ ॥
वेदात्मनायविद्महेहिरण्यगर्भायधीमहि ॥ तन्नोब्रह्मप्रचोदयात् ॥ ५ ॥ नारायणायविद्महेवासुदेवायधीमहि ॥ त
न्नोविष्णुःप्रचोदयात् ॥ ६ ॥ वज्रनखायविद्महेतीक्ष्णदंष्ट्रायधीमहि ॥ तन्नोनारसिंहःप्रचोदयात् ॥ ७ ॥ भा
स्करायविद्महेमहद्द्युतिकरायधीमहि ॥ तन्नोआदित्यःप्रचोदयात् ॥ ८ ॥ वैश्वानरायविद्महेलालीलायधीमहि ॥
तन्नोअग्निःप्रचोदयात् ॥ ९ ॥ कात्यायनायविद्महेकन्यकुमारिधीमहि ॥ तन्नोदुर्गिःप्रचोदयात् ॥ १० ॥ ॐराजा
धिराजायप्रसह्यसाहिने ॥ नमोवयंवैश्रवणायकुर्महे ॥ समेकामान्कामकामायमह्यम् ॥ कामेश्वरोवैश्रवणोददातु ॥
कुबेरायवैश्रवणाय ॥ महाराजायनमः ॥ ॐस्वस्ति ॥ साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमा
धिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात्पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥ तदप्येषश्लोको

भिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ ॥ अथविवाहादौ मंत्राः ॥ वाग्दाने ॥ [1]अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ १ ॥ ऋक् ॥ समानीवआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥ [2]प्रसुग्मंताधियसानस्यंसक्षणिवरेभिर्वराँअभिषुप्रसीदतः ॥ अस्माकमिंद्रउभयंजुजोषतियत्सोम्यस्यांधसोबुबोधति ॥ [3]हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ [4]समिद्धस्यश्रयमाणःपुरस्ताद्ब्रह्मवन्वानोअजरंसुवीरं ॥ आरेअस्मदमतिंबाधमानउच्छ्रयस्वमहतेसौभगाय ॥ [5]वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम ॥ यंत्वामयंस्वधितिस्तेजमानःप्रणिनायमहतेसौभगाय ॥ [6]इंदुर्देवानामुपसख्यमायन्त्सहस्रधारःपवतेमदाय ॥ नृभिस्तवानोअनुधामपूर्वमगन्निंद्रंमहतेसौभगाय ॥ [7]अस्यपिबक्षुमतःप्रस्थितस्येंद्रसोमस्यवरमासुतस्य ॥ स्वस्तिदामनसामादयस्वार्वाचीनोरेवतेसौभगाय ॥ [8]घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ इतिसौभगायपदान्ताःषट् ॥ तदस्तुमित्रावरुणा० ॥ [1]अहंवर्ष्मसजातानांविद्युतामिवसूर्यः ॥ इदंतमधितिष्ठामियोमाकश्चाभिदासति ॥ मधुवाताऋतायते० ऋक् ३ ॥ वसवस्त्वागायत्रेणच्छंदसाभक्षयंतु ॥ रुद्रास्त्वात्रैष्टुभेनच्छंदसाभक्षयंतु ॥ आदित्यास्त्वाजागतेनच्छंदसाभक्षयंतु ॥ विश्वेत्वादेवाआनुष्टुभेनच्छंदसाभक्षयंतु ॥ भूतेभ्यस्त्वा ३ ॥ विराजोदोहोसि ॥ विराजोदोहमशीय ॥ मयिदोहःपद्यायैविराजः ॥ अमृतापिधानमसि ॥ सत्यंयशःश्रीर्मयिश्रीःश्रयतां ॥ [2]मातारुद्राणांदुहितावसूनांस्वसादित्यानाममृतस्यनाभिः ॥ प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट ॥ ओमुत्सृजत ॥ [3]ॐसत्येनोत्तभिताभूमिःसूर्येणोत्तभिताद्यौः ॥ ऋतेनादित्यास्तिष्ठंतिदिविसोमोअधिश्रितः ॥ सोमेनादित्याबलिनःसोमेनपृथिवीमही ॥ अथोनक्षत्राणामेषामुपस्थेसोमआहितः ॥ सोमंमन्यतेपपिवान्यत्संपिंषंत्योषधिं ॥ सोमंयंब्रह्माणोविदुर्नतस्याश्नातिकश्चन ॥

१ अनृक्षराइत्यस्यसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् ॥ २ प्रसुग्मंतेत्यस्यकवषइंद्रोजगती ॥ ३ हिंकृण्वतीत्यस्यदीर्घतमाविश्वेदेवास्त्रिष्टुप् ॥ ४ समिद्धेत्यस्यविश्वामित्रोयूपस्तुतिस्त्रिष्टुप् ॥ ५ वनस्पतइत्यस्यविश्वामित्रोयूपस्त्रिष्टुप् ॥ ६ इंदुर्देवानामित्यस्यवसिष्ठःपवमानसोमस्त्रिष्टुप् ॥ ७ अस्यपिबेत्यस्याग्निर्यूपइंद्रस्त्रिष्टुप् ॥ ८ घृतादुल्लुप्तमित्यस्यसनकसनंदनसनातनादयोहिरण्यंत्रिष्टुप् ॥

१ अहंवर्ष्मेत्यस्यवामदेवोविष्टरोनुष्टुप् ॥ २ मातारुद्राणामित्यस्यभार्गवोजमदग्निर्गौस्त्रिष्टुप् ॥ ३ सत्येनोत्तभितेतिसप्तचत्वारिंशदृचस्यसूक्तस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप्आद्यानांपंचानांसोमःततएकादशानांसूर्याविवाहःसप्तदश्यादेवाःअष्टादश्याःसोमार्कौएकोनविंश्याश्चंद्रमाःततोनवानांनृणांविवाहमंत्राआशीःप्रायाःततोद्वेवधूवासस्स्पर्शनिंदार्थेएकात्रिंशीदंपत्योर्यक्ष्मनाशिनीचतुर्दशीएकोनविंश्यादितिस्रस्त्रयोविंशीचतुर्विंशीषड्विंशीषट्त्रिंशीचतुश्चत्वारिंश्यश्चत्रिष्टुभःअष्टादशीसप्तविंशीत्रिचत्वारिंश्यश्चजगत्यःचतुस्त्रिंशीउरोबृहती ॥

आच्छद्विधानैर्गुपितोबार्हतैःसोमरक्षितः ॥ ग्राव्णामिच्छृण्वंतिष्ठसिनतेअश्नातिपार्थिवः ॥ यत्त्वादेवप्रपिबंतितत
आप्यायसेपुनः ॥ वायुःसोमस्यरक्षितासमानांमासआकृतिः ॥ १ ॥ रैभ्यासीदनुदेयीनाराशंसीन्योचनी ॥ सूर्या
याभद्रमिद्वासोगाथयैतिपरिष्कृतं ॥ चित्तिराउपबर्हणंचक्षुराअभ्यंजनं ॥ द्यौर्भूमिःकोशआसीद्यदयात्सूर्यापतिं ॥ स्तो
माआसन्प्रतिधयःकुरीरंछंदओपशः ॥ सूर्यायाअश्विनावराग्निरासीत्पुरोगवः ॥ सोमोवधूयुरभवदश्विनास्तामुभाव
रा ॥ सूर्यांयत्पत्येशंसंतींमनसासविताददात् ॥ मनोअस्याअनआसीद्यौरासीदुतच्छदिः ॥ शुक्रावनड्वाहावास्तांय
दयात्सूर्यागृहं ॥ २ ॥ ऋक्सामाभ्यामभिहितौगावौतेसामनावितः ॥ श्रोत्रंतेचक्रेआस्तांदिविपंथाश्चराचरः ॥ शु
चीतेचक्रेयात्याव्यानोअक्षआहतः ॥ अनोमनस्मयंसूर्यारोहत्प्रयतीपतिं ॥ सूर्यायावहतुःप्रागात्सवितायमवासृजत् ॥
अघासुहन्यंतेगावोर्जुन्योःपर्युह्यते ॥ यदश्विनापृच्छमानावयातंत्रिचक्रेणवहतुंसूर्यायाः ॥ विश्वेदेवाअनुतद्वामजान
न्पुत्रःपितरावबृणीतपूषा ॥ यदयातंशुभस्पतीवरेयंसूर्यामुप ॥ क्वैकंचक्रंवामासीत्क्वदेष्ट्रायतस्थथुः ॥ ३ ॥ द्वेतेचक्रे
सूर्येब्रह्माणऋतुथाविदुः ॥ अथैकंचक्रंयद्गुहातदद्धातयइद्विदुः ॥ सूर्यायैदेवेभ्योमित्रायवरुणायच ॥ येभूतस्यप्रचे
तसइदंतेभ्योकरंनमः ॥ पूर्वापरंचरतोमाययैतौशिशूक्रीळंतौपरियातोअध्वरं ॥ विश्वान्यन्योभुवनाभिचष्टऋतूँर
न्योविदधज्जायतेपुनः ॥ नवोनवोभवतिजायमानोन्हांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिर

तेदीर्घमायुः ॥ सुकिंशुकंशल्मलिंविश्वरूपंहिरण्यवर्णसुवृतंसुचक्रं ॥ आरोहसूर्येअमृतस्यलोकंस्योनंपत्येवहतुंकृणु
ष्व ॥ ४ ॥ उदीर्ष्वातःपतिवतीह्येषाविश्वावसुंनमसागीर्भिरीळे ॥ अन्यामिच्छपितृषदंव्यक्तांसतेभागोजनुषातस्य
विद्धि ॥ उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा ॥ अन्यामिच्छप्रफर्व्यंसंजायांपत्यासृज ॥ अनृक्षराऋजवःसंतुपं
थायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ प्रत्वामुंचामिवरुणस्यपा
शाद्येनत्वाबध्नात्सवितासुशेवः ॥ ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि ॥ प्रेतोमुंचामिनामुतःसुबद्धा
ममुतस्करं ॥ यथेयमिंद्रमीढ्वःसुपुत्रासुभगासति ॥ ५ ॥ पूषात्वेतोनयतुहस्तगृह्याश्विनात्वाप्रवहतांरथेन ॥ गृहान्
गच्छगृहपत्नीयथासोवशिनीत्वंविदथमावदासि ॥ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि ॥ एनाप
त्यातन्वंसंसृजस्वाधाजिव्रीविदथमावदाथः ॥ नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते ॥ एधंतेअस्याज्ञातयःपतिर्बंधे
षुबध्यते ॥ परादेहिशामुल्यंब्रह्मभ्योविभजावसु ॥ कृत्यैषापद्वतीभूत्व्याजायाविशतेपतिं ॥ अश्रीरातनूर्भवतिरुश
तीपापयामुया ॥ पतिर्यद्वध्वोवाससास्वमंगमभिधित्सते ॥ ६ ॥ येवध्वश्चंद्रंवहतुंयक्ष्मायंतिजनादनु ॥ पुनस्तान्य
ज्ञियादेवानयंतुयतआगताः ॥ माविदन्परिपंथिनोयआसीदंतिदंपती ॥ सुगेभिर्दुर्गमतीतामपद्रांत्वरातयः ॥ सुमं
गलीरियंवधूरिमांसमेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्तंविपरेतन ॥ तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ॥

सूर्यायोब्रह्माविद्यात्सइद्वाधूयमर्हति ॥ आशसनंविशसनमथोअधिविकर्तनं ॥ सूर्यायाःपश्यरूपाणितानिब्रह्मातुशुंधति ॥ ७ ॥ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ तांपूषन्छिवतमामेरयस्वयस्यांबीजंमनुष्या३वपंति ॥ यानऊरूउशतीविश्रयातेयस्यामुशंतःप्रहरामशेपं ॥ तुभ्यमग्रेपर्यवहन्त्सूर्यांवहतुनासह ॥ पुनःपतिभ्योजायांदाअग्नेप्रजयासह ॥ पुनःपत्नीमग्निरदादायुषासहवर्चसा ॥ दीर्घायुरस्यायःपतिर्जीवातिशरदःशतं ॥ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः ॥ ८ ॥ सोमोददद्गंधर्वायगंधर्वोददद्ग्नये ॥ रयिंचपुत्रांश्चादादग्निर्मह्यमथोइमां ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥ सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव ॥ ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ ॥ संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥ ९ ॥ [1]अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसु

१ अघोरचक्षुरित्यस्यसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् ॥

वर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ कइदंकस्माअदात्कामःकामायादात्कामोदाताकामःप्रतिग्रहीताकामंसमुद्रमाविशकामेनत्वाप्रतिगृह्णामिकामैतत्तेवृष्टिरसिद्यौस्त्वाददातुपृथिवीप्रतिगृह्णातु ॥ [1]यत्कक्षीवांसंवननंपुत्रोअंगिरसाभवेत् ॥ तेननोद्यविश्वेदेवाःसंप्रियांसमजीजनन् ॥ ॐ[2]अनाधृष्टमस्यनाधृष्यंदेवानामोजोअभिशस्तिपाः ॥ अनभिशस्त्यंजसासत्यमुपगेषांस्वितेमाधाः ॥ [3]आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥ सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव ॥ ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ समुद्रज्येष्ठाः० ऋ० ॥ ४ ॥ आपोहिष्ठामयो० ऋ० ३ ॥ [4]परित्वागिर्वणोगिरइमाभवंतुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवंतुजुष्टयः ॥ [5]तान्वोमहोमरुतएवयाव्नोविष्णोरेषस्यप्रभृथेहवामहे ॥ हिरण्यवर्णान्ककुहान्यतस्रुचोब्रह्मण्यंतःशंस्यंराधईमहे ॥ [6]दशा

१ यत्कक्षीवांसंवननोविश्वेदेवास्त्रिष्टुप् ॥ २ अनाधृष्टमित्यस्यवामदेवआपोजगती ॥ ३ आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासावित्रीआद्याजगतीद्वितीयात्रिष्टुप्अंत्येद्वेअनुष्टुभौ ॥ ४ परित्वेतिमधुच्छंदाइंद्रोनुष्टुप् ॥ ५ तान्वोमहइत्यस्यगृत्समदोमरुतोजगती ॥ ६ दशावनिभ्यइतिचतसृणांकाद्रवेयोर्बुदःसर्पोग्रावाणाआद्यात्रिष्टुबंत्यास्तिस्रोजगत्यः ॥

वनिभ्योदशकक्ष्येभ्योदशयोक्रेभ्योदशयोजनेभ्यः ॥ दशाभीशुभ्योअर्चताजरेभ्योदशधुरोदशयुक्तावहद्भ्यः ॥ तेअद्रयोदशयंत्रासआशवस्तेषामाधानंपर्येतिहर्यतं ॥ तऊसुतस्यसोम्यस्यांधसोंशोःपीयूषंप्रथमस्यभेजिरे ॥ तेसोमादोहरीइंद्रस्यनिंसतेंशुंदुहंतोअध्यासतेगवि ॥ तेभिर्दुग्धंपपिवान्त्सोम्यंमध्विंद्रोवर्धतेप्रथतेवृषायते ॥ वृषावोअंशुर्नकिलारिषाथनेळावंतःसदमित्स्थनाशिताः ॥ रैवत्येवमहसाचारवस्थनयस्यग्रावाणोअजुषध्वमध्वरं ॥ ॐ[1]नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते॥ एधंतेअस्याज्ञातयःपतिर्बंधेषुबध्यते ॥ [2]विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऋषिबंधवे ॥ [3]अग्नेविश्वेभिःस्वनीकदेवैरूर्णावंतंप्रथमःसीदयोनिं ॥ कुलायिनंघृतवंतंसवित्रेयज्ञंनययजमानायसाधु ॥ ॥ अथायुःपदातामंत्राः ॥ भद्रंकर्णेभिः० यदायुः ॥ १ ॥ [4]पुनःपुनर्जायमानापुराणीसमानंवर्णमभिशुंभमाना ॥ श्वघ्नीवकृत्नुर्विजआमिनानामर्तस्यदेवीजरयंत्यायुः ॥ २ ॥ द्रविणोदाद्र० दीर्घमायुः ॥ ३ ॥ [5]उदीर्ध्वंजीवोअसुर्नआगादपप्रागात्तमआज्योतिरेति ॥ आरैक्पंथांयातवेसूर्यायागन्मयत्रप्रतिरं

१ नीललोहितमित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् ॥ २ विश्वेत्तातइत्यस्यभार्गवोनेमइंद्रोजगती ॥ ३ अग्नेविश्वेभिरित्यस्यभरद्वाजोवीतहव्योवाग्निस्त्रिष्टुप् ॥ ४ पुनःपुनर्जायमानेत्यस्यगौतमोषास्त्रिष्टुप् ॥ ५ उदीर्ध्वमित्यस्यकुत्सोषाजगती ॥



तआयुः ॥ ४ ॥ [1]दक्षिणावतामिदिमानिचित्रादक्षिणावतांदिविसूर्यासः ॥ दक्षिणावंतोअमृतंभजंतेदक्षिणावंतःप्रतिरंतआयुः ॥ ५ ॥ [2]इमेभोजाअंगिरसोविरूपादिवस्पुत्रासोअसुरस्यवीराः ॥ विश्वामित्रायददतोमघानिसहस्रसावेप्रतिरंतआयुः ॥ ६ ॥ [3]यथाहत्यद्वसवोगौर्यंचित्पदिषितामममुंचतायजत्राः ॥ एवोष्व१स्मन्मुंचताव्यंहःप्रतार्यग्नेप्रतरंनआयुः ॥ यशस्करंबलवंतं० दीर्घमायुः ॥ [4]गोमायुरदादजमायुरदात्पृश्निरदाद्धरितोनोवसूनि ॥ गवांमंडूकाददतःशतानिसहस्रसावेप्रतिरंतआयुः ॥ [5]इंद्रावरुणासौमनसमदृप्तंरायस्पोषंयजमानेषुधत्तं ॥ प्रजांपुष्टिंभूतिमस्मासुधत्तंदीर्घायुत्वायप्रतिरतंनआयुः ॥ [6]वृष्टिंदिवःशतधारःपवस्वसहस्रसावाजयुर्देववीतौ ॥ ससिंधुभिःकलशेवावशानःसमुस्रियाभिःप्रतिरंनआयुः ॥ सवितापश्चा० मायुः ॥ नवोनवोभ० मायुः ॥ [7]विद्युन्नयापतंतीदविद्योद्भरंतीमेअप्याकाम्यानि ॥ जनिष्टोअपोनर्यःसुजातःप्रोर्वशीतिरतदीर्घमायुः ॥ उच्चादिवि० युः ॥ ॥ अथदंपत्याशिषः ॥ अविधवाभववर्षाणिशतंसाग्रंतुसुव्रता ॥ तेजस्वीचयशस्वीचधर्मपत्नीपतिव्रता ॥ जनयद्बहुपुत्राणिमाचदुःखंलभेःक्वचित् ॥

१ दक्षिणावतेतिकक्षीवान्त्स्वनयस्यदानस्तुतिस्त्रिष्टुप् ॥ २ इमेभोजाइत्यस्यविश्वामित्रइंद्रस्त्रिष्टुप् ॥ ३ यथाहत्येत्यस्यवामदेवोविश्वेदेवास्त्रिष्टुप् ॥ ४ गोमायुरदेत्यस्यवसिष्ठोमंडूकस्तुतिस्त्रिष्टुप् ॥ ५ इंद्रावरुणासावित्यस्यसुपर्णइंद्रावरुणौजगती ॥ ६ वृष्टिंदिवइत्यस्यदैवोदासिःप्रतर्दनःपवमानसोमस्त्रिष्टुप् ॥ ७ विद्युन्नयेत्यस्यैलःपुरूरवोर्वशीत्रिष्टुप् ॥

भर्तातेसोमपानित्यंभवेद्धर्मपरायणः ॥ अष्टपुत्राभवत्वंचसुभगाचपतिव्रता ॥ भर्तुश्चैवपितुर्भ्रातुर्हृदयानंदिनीसदा ॥
इंद्रस्यतुयथेंद्राणीश्रीधरस्ययथाश्रिया ॥ शंकरस्ययथागौरीतद्वत्तुरपिभर्तरि ॥ अत्रेर्यथानुसूयास्याद्वसिष्ठस्याप्यरुंध
ती ॥ कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ ध्रुवैधिपोष्यामयिमह्यंत्वादाद्बृहस्पतिः ॥ मयापत्याप्रजावतीसंजी
वशरदःशतं ॥ विहिसोतोरसृक्षतनेंद्रंदेवममंसत ॥ यत्रामदद्वृषाकपिरर्यःपुष्टेषुमत्सखाविश्वस्मादिंद्रऽउत्तरः ॥ ॐ
अर्यमणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवोअर्यमाप्रेतोमुंचातुनामुतस्वाहा ॥ ॐअमोहमस्मिसात्वंसात्वमस्यमो
हंद्यौरहंपृथिवीत्वंसामाहमृक्त्वंतावेहविवहावहै ॥ प्रजांप्रजनयावहैसंप्रियौरोचिष्णूसुमनस्यमानौजीवेवशरदःशतं ॥
इममश्मानमारोहाश्मेवत्वंस्थिराभव ॥ सहस्वपृतनायतोभितिष्ठपृतन्यतः ॥ वरुणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदे
वोवरुणःप्रेतोमुंचातुनामुतस्वाहा ॥ पूषणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवःपूषाप्रेतोमुंचातुनामुतस्वाहा ॥ [1]प्रत्वामुं
चामिवरुणस्यपाशाद्येनत्वाबध्नात्सवितासुशेवः ॥ ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि ॥ प्रेतोमुंचामि
नामुतःसुबद्धाममुतस्करं ॥ यथेयमिंद्रमीढ्वःसुपुत्रासुभगासति ॥ ॐइषएकपदीभव ॥ सामामनुव्रताभव ॥ पुत्रान्विं
दावहै ॥ बह्वूंस्तेसंतुजरदष्टयः ॥ ऊर्जेद्विपदीभव ॥ रायस्पोषायत्रिपदीभव ॥ मायोभव्यायचतुष्पदीभव ॥ प्रजा

१ प्रत्वामुंचामीतिद्वयोःसूर्यासावित्रीत्रिष्टुबंत्यानुष्टुप् ॥

भ्यःपंचपदीभव ॥ ऋतुभ्यःषट्पदीभव ॥ सखासप्तपदीभव ॥ [1]प्रातर्यावाणारथ्येववीराजेवयमावरमासचेथे ॥
मेनेइवतन्वाशुंभमानेदंपतीवक्रतुविदाजनेषु ॥ [2]त्वमर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि ॥ अंजंतिमित्रं
सुधितंनगोभिर्यद्दंपतीसमनसाकृणोषि ॥ [3]संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय ॥ जनेमित्रोनदंपतीअ
नक्तिबृहस्पतेवाजयाशूँरिवाजौ ॥ [4]माविदन्परिपंथिनोयआसीदंतिदंपती ॥ सुगेभिर्दुर्गमतीतामपद्रांत्वरातयः ॥
[5]उभावामिंद्राग्नीआहुवध्याउभाराधसःसहमादयध्यै ॥ उभादाताराविषांरयीणामुभावाजस्यसातयेहुवेवां ॥ [6]अस्यप्र
जावतीगृहेसश्वंतीदिवेदिवे ॥ इळाधेनुमतीदुहे ॥ यादंपतीसमनसासुनुतआचधावतः ॥ देवासोनित्ययाशिरा ॥
इतिदंपत्योराशीर्मंत्राः ॥ ॥ अथान्येप्याशीर्मंत्राः ॥ [7]अर्वाचीसुभगेभवसीतेवंदामहेत्वा ॥ यथानःसुभगाससिय
थानःसुफलाससि ॥ [8]रायोबुध्नःसंगमनोवसूनांयज्ञस्यकेतुर्मन्मसाधनोवेः ॥ अमृतत्वंरक्षमाणासएनंदेवाअग्निंधारयं
द्रविणोदां ॥ नूचपुराचसदनंरयीणांजातस्यचजायमानस्यचक्षां ॥ सतश्चगोपांभवतश्चभूरेर्देवा० ॥ द्रविणोदाद्रवि

१ प्रातर्यावाणेतिगृत्समदोऽश्विनौत्रिष्टुप् ॥ २ त्वमर्यमावसुश्रुतोग्निस्त्रिष्टुप् ॥ ३ संगोभिरित्यस्यायास्योबृहस्पतिस्त्रिष्टुप् ॥ ४ मावि
दन्नित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् ॥ ५ उभावामित्यस्यभरद्वाजइंद्राग्नीत्रिष्टुप् ॥ ६ अस्यप्रजावतीतिद्वयोर्मनुर्ज्यास्तवोयजमानप्र
शंसाचद्वितीयायादंपत्योःस्तुतिर्गायत्री ॥ ७ अर्वाचीतिवामदेवःसीतानुष्टुप् ॥ ८ रायोबुध्नइतिचतसृणांकुत्सोद्रविणोदाअग्निस्त्रिष्टुप् ॥

णसस्तुरस्यंद्रविणोदाःसनंरस्यप्रयंसत् ॥ द्रविणोदावीरवंतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ एवानोअग्नेसमिधावृधानोरेवत्पावकश्रवसेविभाहि ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ २ ॥ [1]अवोचाममहतेसौभगायसत्यंत्वेषाभ्यांमहिमानमिंद्रियम् ॥ अस्मान्त्स्विंद्रावरुणाघृतश्चुतस्त्रिभिःसाप्तेभिरवतंशुभस्पती ॥ इंद्रावरुणायदृषिभ्योमनीषांवाचोमतिंश्रुतमदत्तमग्रे ॥ यानिस्थानान्यसृजंतधीरायज्ञंतन्वानास्तपसाभ्यपश्यं ॥ इंद्रावरुणासौमनसमदृप्तंरायस्पोषंयजमानेषुधत्तं ॥ प्रजांपुष्टिंभूतिमस्मासुधत्तंदीर्घायुत्वायप्रतिरतंनऽआयुः ॥१॥ [2]महद्द्यमहतामावृणीमहेवोदेवानांबृहतामनर्वणां ॥ यथावसुवीरजातंनशामहैतद्देवानामवोअद्यावृणीमहे ॥ महोऽअग्नेःसमिधानस्यशर्मण्यनागामित्रेवरुणेस्वस्तये ॥ श्रेष्ठेस्यामसवितुःसवीमनितद्देवानामवोऽअ० ॥ येसवितुःसत्यसवस्यविश्वेमित्रस्यव्रतेवरुणस्यदेवाः ॥ तेसौभगंवीरवद्गोमदप्नोदधातनद्रविणंचित्रमस्मे ॥ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥१॥ [3]ऐतुपूषारयिर्भगःस्वस्तिसर्वधातमः ॥ उरुरध्वास्वस्तये ॥ अरमतिरनर्वणोविश्वोदेवस्यमनसा ॥ आदित्यानामनेहइत् ॥ यथानोमित्रोऽअर्यमाव

१ अवोचामेतितिसृणांसुपर्णइंद्रावरुणौजगती ॥ २ महद्द्येतिचतसृणांलुशोधानाकोविश्वेदेवाजगतीअंत्येत्रिष्टुभौ ॥ ३ ऐतुपूषेत्यष्टानामाशिषोगायत्रीचतुर्थ्यनुष्टुप्अंत्याश्चतस्रःपंक्तयः ॥

रुणःसंतिगोपाः ॥ सुगाऽऋतस्यपंथाः ॥ अग्निंवःपूर्व्यंगिरादेवमीळेवसूनां ॥ सपर्यंतःपुरुप्रियंमित्रंनक्षेत्रसाधसं ॥ मक्षूदेववतोरथःशूरोवापृत्सुकासुचित् ॥ देवानांयऽइन्मनोयजमानऽइयक्षत्यभीदयज्वनोभुवत् ॥ नयजमानरिष्यसिनसुन्वाननदेवयो ॥ देवानांयऽइ० ॥ नकिष्टंकर्मणानशन्नप्रयोषन्नयोषति ॥ देवानांयऽइ० ॥ असदत्रसुवीर्यमुतत्यदाश्वश्व्यं ॥ देवानांय० ॥ ६ ॥ ॥ ॥ ॥ ॥

अथान्यसूक्तानि ॥ बृहस्पतिसूक्तं ॥ [1]इदंवामास्येहविःप्रियमिंद्राबृहस्पती ॥ उक्थंमदश्चशस्यते ॥ अयंवांपरिषिच्यतेसोमऽइंद्राबृहस्पती ॥ चारुर्मदायपीतये ॥ आनऽइंद्राबृहस्पतीगृहमिंद्रश्चगच्छतं ॥ सोमपासोमपीतये ॥ अस्मेऽइंद्राबृहस्पतीरयिंधत्तंशतग्विनं ॥ अश्वावंतंसहस्रिणं ॥ इंद्राबृहस्पतीवयंसुतेगीर्भिर्हवामहे ॥ अस्यसोमस्यपीतये ॥ सोममिंद्राबृहस्पतीपिबतंदाशुषोगृहे ॥ मादयेथांतदोकसा ॥ १ ॥ [2]एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवंतोवयंस्यामपतयोरयीणां ॥ सइद्राजाप्रतिजन्यानिविश्वाशुष्मेणतस्थावभिवीर्येण ॥ बृहस्पतिंयःसुभृतंबिभर्तिवल्गूयतिवंदतेपूर्वभाजं ॥ सइत्क्षेतिसुधितऽओकसिस्वेतस्माऽइळापिन्वतेविश्वदानीं ॥ तस्मैविशःस्वयमेवानमंतेयस्मिन्ब्रह्माराजनिपूर्वएति ॥ अप्रतीतोजयतिसंधनानिप्रतिजन्यान्युतयासजन्या ॥

१ इदंवामितिषळर्चस्यसूक्तस्यवामदेवइंद्राबृहस्पतीगायत्री ॥ २ एवापित्रइतिपंचानांवामदेवोबृहस्पतिस्त्रिष्टुबंत्याजगती ॥

अवस्यवेयोवरिवःकृणोतिब्रह्मणेराजातमवंतिदेवाः ॥ इंद्रश्चसोमंपिबतंबृहस्पतेस्मिन्यज्ञेमंदसानावृषण्वसू ॥ आवांविशंत्विंदवःस्वाभुवोस्मेरयिंसर्ववीरंनियच्छतं ॥ १ ॥ ॥ इतिबृहस्पतिसूक्तं ॥ सस्वश्चिद्धितन्व१ःशुंभमानाऽआहंसासोनीलपृष्ठाऽअपप्तन् ॥ विश्वंशर्धोऽअभितोमानिषेदनरोनरण्वाःसवनेमदंतः ॥ योनोमरुतोऽअभिदुर्हृणायुस्तिरश्चित्तानिवसवोजिघांसति ॥ द्रुहःपाशान्प्रतिसमुंचीष्टतपिष्ठेनहन्मनाहंतनातं ॥ सांतपनाऽइदंहविर्मरुतस्तज्जुजुष्टन ॥ युष्माकोतीरिशादसः ॥ गृहमेधासऽआगतमरुतोमापभूतन ॥ युष्माकोतीसुदानवः ॥ इहेहवःस्वतवसःकवयःसूर्यत्वचः ॥ यज्ञंमरुतऽआवृणे ॥ त्र्यंबकंयजामहे० ॥ [२]अंबितमेनदीतमेदेवितमेसरस्वति ॥ अप्रशस्ताइवस्मसिप्रशस्तिमंबनस्कृधि ॥ त्वेविश्वासरस्वतिश्रितायूंषिदेव्यां ॥ शुनहोत्रेषुमत्स्वप्रजांदेविदिदिड्ढिनः ॥ इमाब्रह्मसरस्वतिजुषस्ववाजिनीवति ॥ यातेमन्मगृत्समदाऽऋतावरिप्रियादेवेषुजुह्वति ॥ प्रेतांयज्ञस्यशंभुवायुवामिदावृणीमहे ॥ अग्निंचहव्यवाहनं ॥ द्यावानःपृथिवीइमंसिध्रमद्यदिविस्पृशं ॥ यज्ञंदेवेषुयच्छतां ॥ आवामुपस्थमद्रुहादे

१ सस्वश्चिद्धीतिषण्णांवसिष्ठोमरुतोंत्यायारुद्रआद्येद्वेत्रिष्टुभौततस्तिस्रोगायत्र्योंत्यानुष्टुप् ॥ २ अंबितमेनदीतमइतिषण्णांगृत्समदःआद्यानांतिसृणांसरस्वतीअंत्यतृचस्यद्यावापृथिवीहविर्धानोवागायत्रीआद्येद्वेअनुष्टुभौतृतीयाबृहती ॥



वाःसीदंतुयज्ञियाः ॥ इहाद्यसोमपीतये ॥ ॥ अथौषधिसूक्तं ॥ [१]याओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ शतंवोअंबधामानिसहस्रमुतवोरुहः ॥ अधाशतक्रत्वोयूयमिमंमेअगदंकृत ॥ ओषधीःप्रतिमोदध्वंपुष्पवतीःप्रसूवरीः ॥ अश्वाइवसजित्वरीर्वीरुधःपारयिष्ण्वः ॥ ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ॥ सनेयमश्वंगांवासआत्मानंतवपूरुष ॥ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं ॥ १ ॥ यत्रौषधीःसमग्मतराजानःसमिताविव ॥ विप्रःसउच्यतेभिषग्रक्षोहामीवचातनः ॥ अश्वावतींसोमावतीमूर्जयंतीमुदोजसं ॥ आवित्सिसर्वाओषधीरस्माअरिष्टतातये ॥ उच्छुष्माओषधीनांगावोगोष्ठादिवेरते ॥ धनंसनिष्यंतीनामात्मानंतवपूरुष ॥ इष्कृतिर्नामवोमाताथोयूयंस्थनिष्कृतीः ॥ सीराःपतत्रिणीःस्थनयदामयतिनिष्कृथ ॥ अतिविश्वाःपरिष्ठाःस्तेनइवव्रजमक्रमुः ॥ ओषधीःप्राचुच्यवुर्यत्किंचतन्वो३रपः ॥ २ ॥ यदिमावाजयन्नहमोषधीर्हस्तआदधे ॥ आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा ॥ यस्यौषधीःप्रसर्पथांगमंगंपरुष्परुः ॥ ततोयक्ष्मंविबाधध्वउग्रोमध्यमशीरिव ॥ साकंयक्ष्मप्रपतचाषेणकिकिदीविना ॥ साकंवातस्यध्राज्यासाकंनश्यनिहाकया ॥ अन्यावोअन्यामवत्वन्यान्यस्याउपावत ॥ ताःसर्वाःसंविदानाइदंमेप्रावतावचः ॥ याःफलिनीर्याअफलाअपुष्पाया

१ याओषधीरितित्रयोविंशत्यृचस्यसूक्तस्याथर्वणोभिषगोषधिस्तुतिरनुष्टुप् ॥

श्चंपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ ३ ॥ मुंचंतुमाशपथ्या३दथोवरुण्यादुत ॥ अथोयमस्यपड्बीशा
त्सर्वस्माद्देवकिल्बिषात् ॥ अवपतंतीरवदंदिवओषधयस्परि ॥ यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥ याओषधीः
सोमराज्ञीर्बह्वीःशतविचक्षणाः ॥ तासांत्वमस्युत्तमारंकामायशंहृदे ॥ याओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु ॥
बृहस्पतिप्रसूताअस्यैसंदत्तवीर्यं ॥ मावोरिषत्खनिता० तुरं ॥ याश्चेदमुपशृण्वंतियाश्चदूरंपरागताः ॥ सर्वाःसंगत्य
वीरुधोस्यैसंदत्तवीर्यं ॥ ओषधयःसंवदंते० पारयामसि ॥ त्वमुत्तमास्योषधेतववृक्षाउपस्तयः ॥ उपस्तिरस्तुसो३स्मा
कंयोअस्मांअभिदासति ॥ ४ ॥ इत्योषधिसूक्तं ॥ अग्निसूक्तम् ॥ [1]भद्राअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणीतिःसुरणाउपे
तयः ॥ यदींसुमित्राविशोअग्रइंधतेघृतेनाहुतोजरतेदविद्युतत् ॥ घृतमग्नेर्वध्र्यश्वस्यवर्धनंघृतमन्नंघृतम्वस्यमेदनं ॥
घृतेनाहुतउर्वियाविपप्रथेसूर्यइवरोचतेसर्पिरासुतिः ॥ यत्तेमनुर्यदनीकंसुमित्रःसमीधेअग्नेतदिदंनवीयः ॥ सरेवच्छो
चसगिरोजुषस्वसवाजंदर्षिसइहश्रवोधाः ॥ यंत्वापूर्वमीळितोवध्र्यश्वःसमीधेअग्नेसइदंजुषस्व ॥ सनःस्तिपाउतभवा
तनूपादात्रंरक्षस्वयदिदंतेअस्मे ॥ भवाद्युम्नीवाध्र्यश्वोतगोपामात्वातारीदभिमातिर्जनानां ॥ शूरइवधृष्णुश्च्यवनःसु
मित्रःप्रनुवोचंवाध्र्यश्वस्यनाम ॥ समज्र्यापर्वत्या३वसूनिदासावृत्राण्यार्याजिगेथ ॥ शूरइवधृष्णुश्च्यवनोजनानांत्वम

1 भद्राअग्नेरितिद्वादशर्चस्यसूक्तस्यवाध्र्यश्वःसुमित्रोग्निस्त्रिष्टुबाद्येद्वेजगत्यौ ॥



ग्नेपृतनायूंरभिष्याः ॥ १ ॥ दीर्घतंतुर्बृहदुक्षायमग्निःसहस्रस्तरीःशतनीथऋभ्वा ॥ द्युमांद्युमत्सुनृभिर्मृज्यमानःसुमि
त्रेषुदीदयोदेवयत्सु ॥ त्वेधेनुःसुदुघाजातवेदोसश्चतेवसमनासबर्धुक् ॥ त्वंनृभिर्दक्षिणावद्भिरग्नेसुमित्रेभिरिध्यसेदेव
यद्भिः ॥ देवाश्चित्तेअमृताजातवेदोमहिमानंवाध्र्यश्वप्रवोचन् ॥ यत्संपृच्छंमानुषीर्विशआयंत्वंनृभिरजयस्त्वावृधे
भिः ॥ पितेवपुत्रमबिभरुपस्थेत्वामग्नेवध्र्यश्वःसपर्यन् ॥ जुषाणोअस्यसमिधंयविष्ठोतपूर्वांअवनोर्व्राधतश्चित् ॥ शश्व
दग्निर्वध्र्यश्वस्यशत्रून्नृभिर्जिगायसुतसोमवद्भिः ॥ समनंचिददहश्चित्रभानोवव्राधंतमभिनद्वृधश्चित् ॥ अयमग्निर्व
ध्र्यश्वस्यवृत्रहासनकात्प्रेद्धोनमसोपवाक्यः ॥ सनोअजामीँरुतवाविजामीनभितिष्ठशर्धतोवाध्र्यश्व ॥ २ ॥ ॥
देवप्रतिष्ठोक्तामंत्राः ॥ ॐ[1]तदिदासभुवनेषुज्येष्ठंयतोजज्ञऽउग्रस्त्वेषनृम्णः ॥ सद्योजज्ञानोनिरिणातिशत्रूननुयं
विश्वेमदंत्यूमाः ॥ १ ॥ हि[2]रण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदे
वायहविषाविधेम ॥ यऽआत्मदाबलदायस्यविश्वऽउपासतेप्रशिषंयस्यदेवाः ॥ यस्यछायामृतंयस्यमृत्युःकस्मै० ॥
यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव ॥ यऽईशेऽअस्यद्विपदश्चतुष्पदःकस्मै० ॥ यस्येमेहिमवंतोमहित्वा
यस्यसमुद्रंरसयासहाहुः ॥ यस्येमाःप्रदिशोयस्यबाहूकस्मै० ॥ येनद्यौरुग्रापृथिवीचदृढायेनस्वःस्तभितंयेननाकः ॥

1 तदिदेत्यस्याथर्वणोबृहद्दिवइंद्रस्त्रिष्टुप् ॥ 2 हिरण्यगर्भइतिदशर्चस्यसूक्तस्यप्राजापत्योहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥

योऽअंतरिक्षेरजसोविमानःकस्मै० ॥ १ ॥ यंक्रंदसीऽअवसातस्तभानेऽअभ्यैक्षेतांमनसारेजमाने ॥ यत्राधिसूरऽउदितोविभातिकस्मै० ॥ आपोहयद्बृहतीर्विश्वमायन्गर्भंदधानाजनयंतीरग्निं ॥ ततोदेवानांसमवर्ततासुरेकःकस्मै० ॥ यश्चिदापोमहिनापर्यपश्यद्दक्षंदधानाजनयंतीर्यज्ञं ॥ योदेवेष्वधिदेवऽएकऽआसीत्कस्मैदे० ॥ मानोहिंसीज्जनितायःपृथिव्यायोवादिवंसत्यधर्माजजान ॥ यश्चापश्चंद्राबृहतीर्जजानकस्मै० ॥ प्रजापतेन० ऋक् १ ॥ ॥ अथदेवीसूक्तंसप्तशतीपाठादौउपयुक्तं ॥ [1]अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः ॥ अहंमित्रावरुणोभाबिभर्म्यहमिंद्राग्नीऽअहमश्विनोभा ॥ अहंसोममाहनसंबिभर्म्यहंत्वष्टारमुतपूषणंभगं ॥ अहंदधामिद्रविणंहविष्मतेसुप्राव्ये३यजमानायसुन्वते ॥ अहंराष्ट्रींसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां ॥ तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर्यावेशयंतीं ॥ मयासोऽअन्नमत्तियोविपश्यतियःप्राणितियऽईंशृणोत्युक्तं ॥ अमंतवोमांतउपक्षियंतिश्रुधिश्रुतश्रद्धिवंतेवदामि ॥ अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः ॥ यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधां ॥ ४ ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाउ ॥ अहंजनायसमदंकृणोम्यहंद्यावापृथिवीऽआविवेश ॥ अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वं१तःसमुद्रे ॥ ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि ॥ अहमेववातऽइवप्रवाम्यारभमाणाभुवनानिविश्वा ॥ परोदिवापरऽएनापृथिव्यैतावतीमहिनासंबभूव ॥ इतिदेवीसू० ॥ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ ॐअभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु ॥ अवतस्यविसर्जने ॥ प्रेतिचेतिचेत्येतद्वैसर्वंस्वस्त्ययनंयत्प्रेतिचेतिचेतितद्योस्यप्रियःस्यात्तमेतेनानुमंत्रयेतप्रेतिचेतिचेतिस्वस्त्येवगच्छतिस्वस्तिपुनरागच्छति ॥ अग्निद्वयसंसर्गादौविशेषमंत्राः ॥ [1]अग्नावग्निश्चरतिप्रविष्टऋषीणापुत्रोअधिराजएषः ॥ तस्मैजुहोमिहविषाघृतेनमादेवानांमोमुहद्भागधेयंमोअस्माकंमोमुहद्भागधेयं ॥ [2]अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा ॥ हव्यवाड्जुह्वास्यः ॥ [3]अस्तीदमधिमंथनमस्तिप्रजननंकृतं ॥ एतांविश्पत्नीमाभराग्निंमंथामपूर्वथा ॥ अरण्योर्निहितोजातवेदागर्भइवसुधितोगर्भिणीषु ॥ दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ उत्तानायामवभराचिकित्वान्त्सद्यःप्रवीतावृषणंजजान ॥ अरुषस्तूपोरुशदस्यपाजइळायास्पुत्रोवयुनेजनिष्ट ॥ [4]पाहिनोअग्नएकयापाह्यु१तद्वितीयया ॥ पाहिगीर्भिस्तिसृभिरूर्जांपतेपाहिचतसृभिर्वसो ॥ [5]त्वंह्यग्नेअग्निनाविप्रोविप्रेणसन्त्सता ॥ सखासख्यासमिध्यसे ॥ [6]पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजेषुनोव ॥ त्वामिद्धिनेदिष्ठंदेवतातयआपिंन

---

१ अहमित्यष्टर्चस्यसूक्तस्यवागांभृण्यात्मस्तुतिस्त्रिष्टुप्द्वितीयाजगती ॥

---

१ अग्नावग्निर्हिरण्यगर्भोग्निःशक्करी ॥ २ अग्निनाग्निर्मधुच्छंदाअग्निर्गायत्री ॥ ३ अस्तीदमधिमंथनमितितिसृणांविश्वामित्रोग्निरनुष्टुप् ॥ ४ पाहिनोअग्नइतिप्रागाथोभर्गोग्निर्बृहती ॥ ५ त्वंह्यग्नेअग्निनेत्यस्यविरूपोग्निर्गायत्री ॥ ६ पाहिविश्वस्मादितिप्रगाथोभर्गोग्निर्बृहती ॥

क्षामहेवृधे ॥ अथौपासनहोमयोर्विशेषमंत्रौ ॥ ॥ [1]तंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनं ॥ [2]हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ [3]हविष्पांतमजरंस्वर्विदिदिविस्पृश्याहुतंजुष्टमग्नौ ॥ तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथंत ॥ गीर्णंभुवनंतमसापगूळ्हमाविःस्वरभवज्जातेअग्नौ ॥ तस्यदेवाःपृथिवीद्यौरुतापोरणयन्नोषधीःसख्येअस्य ॥ देवेभिर्न्विषितोयज्ञियेभिरग्निंस्तोषाण्यजरंबृहंतं ॥ योभानुनापृथिवींद्यामुतेमामाततानरोदसीअंतरिक्षं ॥ योहोतासीत्प्रथमोदेवजुष्टोयंसमांजंनाज्येनावृणानाः ॥ सपतत्रीत्वरंस्थाजगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥ यज्जातवेदोभुवनस्यमूर्धन्नतिष्ठोअग्नेसहरोचनेन ॥ तंत्वाहेममतिभिर्गीर्भिरुक्थैःसयज्ञियोअभवोरोदसिप्राः ॥ [4]त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः ॥ त्वयायज्ञंवितन्वते ॥ १ ॥ [5]योअग्निंदेववीतयेहविष्माँआविवासति ॥ तस्मैपावकमृळय ॥ तंतुंतन्वन्रजं० ॥ [6]त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशु

---

१ तंतुंतन्वन्नित्यस्यदेवाःप्रजापतिर्जगती ॥ २ हिरण्यगर्भइत्यस्यहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ ३ हविष्पांतमितिपंचर्चस्यवामदेव्यःसूर्यवैश्वानरौत्रिष्टुप् ॥ ४ त्वमग्नेसप्रथेत्यस्यसुतंभरोग्निर्गायत्री ॥ ५ योअग्निमित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री ॥ ६ त्वंनोअग्नइत्यस्यगौतमोवामदेवोग्नीवरुणौत्रिष्टुप् ॥





चानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ॥ [1]सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणंरराणोवीहिमृळीकंसुहवोनएधि ॥ [2]इदंतएकंपरऊतएकंतृतीयेनज्योतिषासंविशस्व ॥ संवेशनेतन्व१श्चारुरेधिप्रियोदेवानांपरमेजनित्रे ॥ [3]पूषात्वेतोनयतुहस्तगृह्याश्विनात्वाप्रवहतांरथेन ॥ गृहान्गच्छगृहपत्नीयथासोवशिनीत्वंविदथमावदासि ॥ [4]सप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तऋषयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेन ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञ१ंसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेन ॥ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतन्वोवर्धयस्वसत्याःसंतुयजमानस्यकामाः ॥ [5]अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः ॥ अत्राजहामयेअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् ॥ [6]जीवंरुदंतिविमयंतेअध्वरेदीर्घामनुप्रसितिंदीधियुर्नरः ॥ वामंपितृभ्योयइदंसमेरिरेमयःपतिभ्योजनयःपरिष्वजे ॥ इत्यग्निद्वयसंसर्गादिनवोढागृहप्रवेशेविशेषमंत्राः ॥ [7]अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्य१

---

१ सत्वन्नोअग्नइत्यस्यवामदेवोग्नीवरुणौत्रिष्टुप् ॥ २ इदंतइत्यस्यबृहदुक्थोविश्वेदेवास्त्रिष्टुप् ॥ ३ पूषात्वेतिसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् ॥ ४ सप्ततेअग्नेसप्तवानग्निर्जगती ॥ ५ अश्मन्वतीरित्यस्यदेवोग्निस्त्रिष्टुप् ॥ ६ जीवंरुदंतीत्यस्यघोषाश्विनौजगती ॥ ७ अग्नेनयसुपथेतिपंचानांवसिष्ठोग्निस्त्रिष्टुप् ॥

स्मर्ज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ अग्नेत्वंपारयानव्योऽअस्मान्त्स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वी
बहुलानउर्वीभवातोकायतनयायशंयोः ॥ अग्नेत्वमस्मद्युयोध्यमीवाअनग्नित्राऽअभ्यमंतकृष्टीः ॥ पुनरस्मभ्यंसुविता
यंदेवक्षांविश्वेभिरमृतेभिर्यजत्र ॥ पाहिनोअग्नेपायुभिरजस्रैरुतप्रियेसदनआशुशुक्वान् ॥ मातेभयंजरितारंयविष्ठनू
नंविदन्मापरंसहस्वः ॥ मानोऽअग्नेवसृजोअघायाविष्यवेरिपवेदुच्छुनायै ॥ मादत्वतेदशतेमादतेनोमारीषतेसहसा
वन्परादाः ॥ इतिश्रवणाकर्मादावुपयुक्तमंत्राः ॥ [1]प्रातरग्निंप्रातरिंद्रंहवामहेप्रातर्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भ
गंपूषणंब्रह्मणस्पतिंप्रातःसोममुतरुद्रंहुवेम ॥ प्रातर्जितंभगमुग्रंहुवेमवयंपुत्रमदितेर्योविधर्ता ॥ आध्रश्चिद्यंमन्यमान
स्तुरश्चिद्राजाचिद्यंभगंभक्षीत्याह ॥ भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भग
प्रनृभिर्नृवंतःस्याम ॥ उतेदानींभगवंतःस्यामोतप्रपित्वऽउतमध्येऽअह्नां ॥ उतोदितामघवन्त्सूर्यस्यवयंदेवानांसुम
तौस्याम ॥ भगऽएवभगवाँऽअस्तुदेवास्तेनवयंभगवंतःस्याम ॥ तंत्वाभगसर्वऽइज्जोहवीतिसनोभगपुरऽएताभवेह ॥
समध्वरायोषसोनमंतदधिक्रावेवशुचयेपदाय ॥ अर्वाचीनंवसुविदंभगंनोरथमिवाश्वावाजिनऽआवहंतु ॥ अश्वाव

१ प्रातरग्निमितिसप्तर्चस्यसूक्तस्यवसिष्ठआद्यायालिंगोक्तादेवताःअंत्यायाउषास्त्रिष्टुप्आद्याजगती ॥

तीर्गोमतीर्नऽउषासोवीरवतीःसदमुच्छंतुभद्राः ॥ घृतंदुहानाविश्वतःप्रपीतायूयंपातस्वस्तिभिःसदानः ॥१॥ [1]इंद्रंविश्वा
अवीवृधन्त्समुद्रव्यचसंगिरः ॥ रथीतमंरथीनांवाजानांसत्पतिंपतिं ॥ सख्येतइंद्रवाजिनोमाभेमशवसस्पते ॥ त्वा
मभिप्रणोनुमोजेतारमपराजितं ॥ पूर्वीरिंद्रस्यरातयोनविदस्यंत्यूतयः ॥ यदीवाजस्यगोमतस्तोतृभ्योमंहतेमघं ॥
पुरांभिंदुर्युवाकविरमितौजाअजायत ॥ इंद्रोविश्वस्यकर्मणोधर्तावज्रीपुरुष्टुतः ॥ त्वंवलस्यगोमतोपावरद्रिवोबिलं ॥
त्वांदेवाअबिभ्युषस्तुज्यमानासआविषुः ॥ तवाहंशूररातिभिःप्रत्यायंसिंधुमावदन् ॥ उपातिष्ठंतगिर्वणोविदुष्टेतस्य
कारवः ॥ मायाभिरिंद्रमायिनंत्वंशुष्णमवातिरः ॥ विदुष्टेतस्यमेधिरास्तेषांश्रवांस्युत्तिर ॥ इंद्रमीशानमोजसाभि
स्तोमाअनूषत ॥ सहस्रंयस्यरातयउतवासंतिभूयसीः ॥ ८ ॥ सूक्तं ॥ [2]आगावोऽअग्मन्नुतभद्रमक्रन्त्सीदंतुगोष्ठेरण
यंत्वस्मे ॥ प्रजावतीःपुरुरूपाऽइहस्युरिंद्रायपूर्वीरुषसोदुहानाः ॥ इंद्रोयज्वनेपृणतेचशिक्षत्युपेद्ददातिनस्वंमुषायति ॥
भूयोभूयोरयिमिदस्यवर्धयन्नभिन्नेखिल्येनिदधातिदेवयुं॥नतानशंतिनदभातितस्करोनासामामित्रोव्यथिरादधर्षति ॥
देवांश्चयाभिर्यजतेददातिचज्योगित्ताभिःसचतेगोपतिःसह ॥ नताऽअर्वारेणुककाटोऽअश्नुतेनसंस्कृतत्रमुपयंतिताऽ

१ इंद्रंविश्वाइत्यष्टर्चस्यसूक्तस्यजेतामाधुच्छंदसइंद्रोनुष्टुप् ॥ २ आगावइत्यष्टर्चस्यसूक्तस्यभरद्वाजोगौस्त्रिष्टुप्द्वितीयायाइंद्रश्चांत्यपादस्य
चद्वितीयाद्यास्तिस्रोजगत्योंत्यानुष्टुप् ॥

अभि ॥ उरुगायमभयंतस्यताऽअनुगावोमतंस्यविचरंतियज्वनः ॥ गावोभगोगावऽइंद्रोमेऽअच्छान्गावःसोमस्यप्र
थमस्यभक्षः ॥ इमायागावःसजनासऽइंद्रऽइच्छामीद्धृदामनसाचिदिंद्रं ॥ यूयंगावोमेदयथाकृशंचिदश्रीरंचित्कृणु
तासुप्रतीकं ॥ भद्रंगृहंकृणुथभद्रवाचोबृहद्वोवयऽउच्यतेसभासु ॥ प्रजावतीःसूयवसंरिशंतीःशुद्धाऽअपःसुप्रपाणेपि
बंतीः ॥ मावःस्तेनऽईशतमाघशंसःपरिवोहेतीरुद्रस्यवृज्याः ॥ उपेदमुपपर्चनमासुगोषूपपृच्यतां ॥ उपऽऋषभस्यरे
तस्युपेंद्रतववीर्ये ॥ १ ॥ ॥ व्रतशांत्यर्चादावुपयुक्ताः ॥ [1]अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधाम
भिप्रियंमतिंकविं ॥ ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ [2]अग्नआयाहिवी
तयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ [3]अभित्वादेवसवितरीशानंवार्याणां ॥ सदावन्भागमीमहे ॥
[4]ज्मयाअत्रवसवोरंतदेवाउरावंतरिक्षेमर्जयंतशुभ्राः ॥ अर्वाक्पथउरुज्रयःकृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य ॥ [5]आ
रुद्रासऽइंद्रवंतःसजोषसोहिरण्यरथाःसुवितायगंतन ॥ इयंवोऽअस्मत्प्रतिहर्यतेमतिस्तृष्णजेनदिवऽउत्साऽउदन्य

१ अभित्यंदेवंसप्तसागराअष्टी ॥ २ अग्नआयाहीतिभरद्वाजोग्निर्गायत्री ॥ ३ अभित्वादेवसवितरित्यस्याजीगर्तिःशुनःशेपोवैश्वामि
त्रोदेवरातःसावित्रोंत्याभागीवागायत्री ॥ ४ ज्मयाअत्रमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप् ॥ ५ आरुद्रासःश्यावाश्वएकादशरुद्राजगती ॥

वे ॥ त्यांनुक्षत्रियांअवआदित्यान्याचिषामहे ॥ सुमृळीकाँअभिष्टये ॥ अश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् ॥
अर्वाग्रथंसमनसानियच्छतं ॥ [2]ओमासश्चर्षणीधृतोविश्वेदेवासआगत ॥ दाश्वांसोदाशुषःसुतं ॥ [3]अप्सरसांगंधर्वाणां
मृगाणांचरणेचरन् ॥ केशीकेतस्यविद्वान्त्सखास्वादुर्मदिंतमः ॥ [4]अदितिर्ह्यजनिष्टदक्षयादुहितातव ॥ तांदेवाअन्व
जायंतभद्राअमृतबंधवः ॥ [5]मरुतोयस्यहिक्षयेपाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥ [6]अश्व्योवारोअभवस्तदिं
द्रसृकेयत्त्वाप्रत्यहन्देवएकः ॥ अजयोगाअजयःशूरसोममवासृजःसर्तवेसप्तसिंधून् ॥ [7]इदंकवेरादित्यस्यस्वराजोवि
श्वानिसांत्यभ्यस्तुमह्ना ॥ अतियोमंद्रोयजथायदेवःसुकीर्तिभिक्षेवरुणस्यभूरेः ॥ तवव्रतेसुभगासःस्यामस्वाध्योवरु
णतुष्टुवांसः ॥ उपायनऽउषसांगोमतीनामग्नयोनजरमाणाअनुद्यून् ॥ तवस्याम०ऋक् १ ॥ प्रसीमादित्योअसृजद्वि
धर्ताऽऋतंसिंधवोवरुणस्ययंति ॥ नश्राम्यंतिनविमुचंत्येतेवयोनपप्तूरघुयापरिज्मन् ॥ विमच्छ्रथायरशनामिवागऋ
ध्यामतेवरुणखामृतस्य ॥ मातंतुश्छेदिवयतोधियंमेमामात्राशार्यपसःपुरऽऋतोः ॥ १ ॥ अपोसुम्यक्षवरुणभियसंम

१ त्यांनुसांमदोमत्स्योमान्योवाद्वादशादित्यागायत्री ॥ २ ओमासोवैश्वामित्रोमधुच्छंदाविश्वेदेवागायत्री ॥ ३ अप्सरसोमैतशऋष्यश्रृंगो
गंधर्वाप्सरसोनुष्टुप् ॥ ४ अदितिर्लोक्योबृहस्पतिर्दक्षोनुष्टुप् ॥ ५ मरुतोयस्यराहूगणोगौतमोमरुतोगायत्री ॥ ६ अश्व्योवाराइत्यस्यहिर
ण्यस्तूपइंद्रस्त्रिष्टुप् ॥ ७ इदंकवेरित्येकादशर्चस्यसूक्तस्यकूर्मोगृत्समदोवरुणस्त्रिष्टुप् ॥

त्सम्राळृतावोनुमागृभाय ॥ दामेववत्साद्विमुमुग्ध्यंहोनहित्वदारेनिमिषश्चनेशे ॥ मानोवधैर्वरुणयेतइष्टावेनःकृण्वंतमसुरभ्रीणंति ॥ माज्योतिषःप्रवसथानिगन्मविषूमृधःशिश्रथोजीवसेनः ॥ नमःपुरातेवरुणोतनूनमुतापरंतुविजातब्रवाम ॥ त्वेहिकंपर्वतेनश्रितान्यप्रच्युतानिदूळभव्रतानि ॥ परऋणासावीरधमत्कृतानिमाहंराजन्नन्यकृतेनभोजं ॥ अव्युष्टाइन्नुभूयसीरुषासआनोजीवान्वरुणतासुशाधि ॥ योमेराजन्युज्योवासखावास्वप्नेभयंभीरवेमह्यमाह ॥ स्तेनोवायोदिप्सतिनोवृकोवात्वंतस्माद्वरुणपाह्यस्मान् ॥ माहंमघोनोवरुणप्रियस्यभूरिदाव्नआविदंशूनमापेः ॥ मारायोराजन्सुयमादवस्थांबृहद्वदेमविदथेसुवीराः ॥ २ ॥ सूक्तं ॥ [1]प्रसद्योअग्नेअत्येष्यन्यानाविर्यस्मैचारुतमोबभूथ ॥ ईळेन्योवपुष्योविभावाप्रियोविशामतिथिर्मानुषाणां ॥१॥ देवीरापोमातरःसूदयित्न्वोघृतवत्पयोमधुमन्नोऽअर्चत ॥ उतमातावृहद्दिवाशृणोतुनस्त्वष्टादेवेभिर्जनिभिःपितावचः ॥ [2]घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्मणाविष्कभितेअजरेभूरिरेतसा ॥ असश्चंतीभूरिधारेपयस्वतीघृतंदुहातेसुकृतेशुचिव्रते ॥ राजंतीअस्यभुवनस्यरोदसीअस्मेरतःसिंचतंयन्मनुर्हितं ॥ योवामृजवेक्रमणायरोदसीमर्तोददाशधिषणेससाधति ॥ प्रप्रजाभिर्जायतेधर्मणस्परियुवोःसिक्ताविषुरूपाणिसव्रता ॥ घृतेनद्यावापृथिवीअभीवृतेघृतश्रियाघृतपृचाघृतावृधा ॥ उर्वीपृ

१ प्रसद्यइत्यस्यात्रेयोबुधगविष्ठिरावग्निस्त्रिष्टुप् ॥ २ घृतवतीतिषळृचस्यसूक्तस्यभरद्वाजोद्यावापृथिव्यौजगती ॥

थ्वीहोतृवूर्येपुरोहितेतेइद्विप्राईळतेसुम्नमिष्टये ॥ मधुनोद्यावापृथिवीमिमिक्षतांमधुश्चुतामधुदुघेमधुव्रते ॥ दधानेयज्ञंद्रविणंचदेवतामहिश्रवोवाजमस्मेसुवीर्यं ॥ ऊर्जंनोद्यौश्चपृथिवीचपिन्वतांपितामाताविश्वविदासुदंससा ॥ संरराणेरोदसीविश्वशंभुवासनिंवाजंरयिमस्मेसमिन्वतां ॥ १ ॥ [1]यागुंगूर्यासिनीवालीयाराकायासरस्वती ॥ इंद्राणीमह्वऊतयेवरुणानींस्वस्तये ॥ अयंमेहस्तोभगवानयंमेभगवत्तरः ॥ अयंमेविश्वभेषजोयंशिवाभिमर्शनः ॥ एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवंतोवयंस्यामपतयोरयीणां ॥ [2]विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवएकः ॥ १ ॥ [3]योजागारतमृचःकामयंतेयोजागारतमुसामानियंति ॥ योजागारतमयंसोमऽआहतवाहमस्मिसख्येन्योकाः ॥ अग्निर्जागारतमृचःकामयंतेग्निर्जागारतमुसामानियंति ॥ अग्निर्जागारतमयंसोमऽआहतवाहमस्मिसख्येन्योकाः ॥ जागर्षित्वंभुवनेजातवेदोजागर्षियत्रयजंतेहविष्मान् ॥ इदंहविःश्रद्दधानोजुहोमितेनपासिगुह्यंनामगोनां ॥ ३ ॥ [4]देवानांपत्नीरुशतीरवं

१ यागुंगूरित्यस्यगुंगूसिनीवालीराकासरस्वतींद्राणीवरुणान्यश्चानुष्टुप् ॥ २ विश्वतश्चक्षुरित्यस्यभौवनोविश्वकर्माविश्वकर्मात्रिष्टुप् ॥ ३ योजागारेतिद्वयोःकाश्यपोवत्सारःसदापृणाद्यात्रेयाश्चविश्वेदेवाजगत्यंत्येत्रिष्टुभौ ॥ ४ देवानांपत्नीरितिद्वयोरात्रेयोदेवपत्न्योजगती द्वितीयात्रिष्टुप् ॥

तुनः प्रावंतुनस्तुजयेवाजंसातये ॥ याः पार्थिवासोयाऽअपामपिंव्रतेतानोदेवीः सुहवाः शर्मयच्छत ॥ उतग्नाव्यंतुदेवप
त्नीरिंद्राण्यग्नाय्यश्विनीराट् ॥ आरोदसीवरुणानीशृणोतुव्यंतुदेवीर्यऽऋतुर्जनीनां ॥ ४ ॥ [1]येनंतोकायतनयाय
धान्यंबीजंवहध्वेऽअक्षितं ॥ अस्मभ्यंतद्धत्तनयद्वऽईमहेराधोविश्वायुसौभगं ॥ [2]अषाळ्हंयुत्सुपृतनासुपप्रिंस्वर्षामप्सां
वृजनस्यगोपां ॥ भरेषुजांसुक्षितिंसुश्रवसंजयंतंत्वामनुमदेमसोम ॥ त्वमिमाओषधीः सोमविश्वास्त्वमपोअजनयस्त्वं
गाः ॥ त्वमाततंथोर्वंतरिक्षंत्वंज्योतिषावितमोववर्थ ॥ देवेनंनोमनसादेवसोमरायोभागंसहसावन्नभियुध्य ॥ मा
त्वातनदीशिषेवीर्यस्योभयेभ्यः प्रचिकित्सागविष्टौ ॥ ४ ॥ [3]एताउत्याउषसः केतुमक्रतपूर्वेअर्धेरजसोभानुमंजते ॥ नि
ष्कृण्वानाआयुधानीवधृष्णवः प्रतिगावोरुषीर्यंतिमातरः ॥ उदपप्तन्नरुणाभानवोवृथास्वायुजोअरुषीर्गाअयुक्षत ॥
अक्रन्नुषासोवयुनानिपूर्वथारुशंतंभानुमरुषीरशिश्रयुः ॥ [4]असिहिवीरसेन्योसिभूरिपरादृदिः ॥ असिदभ्रस्यचिद्वृधोय
जमानायशिक्षसिसुन्वतेभूरितेवसु ॥ [5]अग्निनाग्निः समिध्यतेकविर्गृहपतिर्युवा ॥ हव्यवाड्जुह्वास्यः ॥ [6]यथाविप्रस्यम

१ येनतोकेत्यस्यश्यावाश्वोमरुतः सतोबृहती ॥ २ अषाळ्हमितितिसृणांगोतमः सोमस्त्रिष्टुप् ॥ ३ एताउत्याइतिद्वयोर्गोतमउषाजगती ॥
४ असिहिवीत्यस्यगोतमइंद्रः पंक्तिः ॥ ५ अग्निनाग्निरित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री ॥ ६ यथाविप्रस्येत्यस्यगोतमोग्निस्त्रिष्टुप् ॥

नुषोहविर्भिर्देवाँऽअयजः कविभिः कविः सन् ॥ एवाहोतः सत्यतरत्वमद्याग्नेमंद्रयाजुह्वायजस्व ॥ [1]अष्टौव्यख्यत्ककुभः
पृथिव्यास्त्रीधन्वयोजनासप्तसिंधून् ॥ हिरण्याक्षः सवितादेवआगाद्दधद्रत्नादाशुषेवार्याणि ॥ [2]अप्स्वग्नेसधिष्टवसौष
धीरनुरुध्यसे ॥ गर्भेसंजायसेपुनः ॥ [3]मोषुवरुणमृन्मयंगृहंराजन्नहंगमं ॥ मृळासुक्षत्रमृळय ॥ यदेमिप्रस्फुरन्निवदृ
तिर्नध्मातोअद्रिवः ॥ मृळासु० ॥ क्रत्वः समहदीनताप्रतीपंजगमाशुचे ॥ मृळासु० ॥ अपांमध्येतस्थिवांसंतृष्णाविद
दज्जरितारं ॥ मृळासु० ॥ यत्किंचेदंवरुणदैव्येजनेभिद्रोहं० ॥ ऋक् १ ॥ १ ॥ [4]सीरायुंजंतिकवयोयुगावितन्वतेपृ
थक् ॥ धीरादेवेषुसुम्नया ॥ [5]रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय ॥ इंद्रोमायाभिः पुरुरूपईयतेयुक्ताह्यस्य
हरयः शतादश ॥ [6]यच्चिद्धिते० साम्राज्यायसुक्रतुः ॥ २ ॥ अतोविश्वान्यद्भुताचिकित्वाँअभिपश्यति ॥ कृतानिया
चकर्त्वा ॥ सनोविश्वाहासुक्रतुरादित्यः सुपथाकरत् ॥ प्रणआयूंषितारिषत् ॥ बिभ्रद्द्रापिंहिरण्ययंवरुणोवस्तनिर्णि
जं ॥ परिस्पशोनिषेदिरे ॥ नयंदिप्संतिदिप्सवोनद्रुह्वाणोजनानां ॥ नदेवमभिमातयः ॥ उतयोमानुषेष्वायशश्चक्रे

१ अष्टौव्यख्यदित्यस्यहिरण्यस्तूपः सवितात्रिष्टुप् ॥ २ अप्स्वग्नेइत्यस्यांगिरसोविरूपोग्निर्गायत्री ॥ ३ मोषुवरुणेतिपंचर्चस्यसूक्तस्य
वसिष्ठोवरुणोगायत्र्यंत्याजगती ॥ ४ सीरायुंजंतीत्यस्यसौम्योबुधोविश्वेदेवागायत्री ॥ ५ रूपंरूपमित्यस्यभारद्वाजोगर्गइंद्रस्त्रिष्टुप् ॥
६ यच्चिद्धीत्येकविंशत्यृचस्यसूक्तस्याजीगर्तिः शुनशेपः सकृत्रिमोवैश्वामित्रोवरुणोगायत्री ॥

असाम्या ॥ अस्माकंमुदरेष्वा ॥ ३ ॥ परामेयंतिधीतयोगावोनगव्यूतीरनु ॥ इच्छंतीरुरुचक्षसं ॥ संनुवोचावहैपु
नर्यतोमेमध्वाभृतं ॥ होतेवक्षदसेप्रियं ॥ दर्शंनुविश्वदर्शतंदर्शंरथमधिक्षमि ॥ एताजुंषतमेगिरः ॥ इमंमेवरुणश्रु
धीहवंमद्याचंमृळय ॥ त्वामंवस्युराचके ॥ त्वंविश्वस्यमेधिरदिवश्चग्मश्चराजसि ॥ सयामनिप्रतिश्रुधि ॥ उदुत्तमं
मुमुग्धिनोविपाशंमध्यमंचृत ॥ अवाधमानिजीवसे ॥ ४ ॥ ॥ ॥ ॥

अर्चायांविशेषमंत्राः ॥ [1]अंसेष्वामरुतःखादयोवोवक्षःसुरुक्माउपशिश्रियाणाः ॥ विविद्युतोनवृष्टिभीरुचानाअ
नुस्वधामायुधैर्यच्छमानाः ॥ प्रबुध्न्यावईरतेमहांसिप्रनामानिप्रयज्यवस्तिरध्वं ॥ सहस्रियंदम्यंभागमेतंगृहमेधीयंम
रुतोजुषध्वं ॥ [2]परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवी
रान् ॥ [3]त्वंनोअग्नआयुषुत्वंदेवेषुपूर्व्यवस्वएकंइरज्यसि ॥ त्वामापःपरिस्रुतःपरियंतिस्वसेतवोनभंतामन्यकेसमे ॥
[4]स्तीर्णंबर्हिरुपनोयाहिवीतयेसहस्रेणनियुतानियुत्वतेशतिनीभिर्नियुत्वते ॥ तुभ्यंहिपूर्वपीतयेदेवादेवायंयेमिरे ॥ प्र
तेसुतासोमधुमंतोअस्थिरन्मदायक्रत्वेअस्थिरन् ॥ १ ॥ [5]यज्ञायज्ञावःसमनातुतुर्वणिर्धियंधियंवोदेवयाउदधिध्वे ॥

१ अंसेष्वेतिद्वयोर्वसिष्ठोमरुतस्त्रिष्टुप् ॥ २ परंमृत्योःसंकुसुकःकालस्त्रिष्टुप् ॥ ३ त्वंनोअग्नइत्यस्यकाण्वोनाभाकोग्निर्महापंक्तिः ॥
४ स्तीर्णंबर्हिरित्यस्यपरुच्छेपोवायुरत्यष्टिः ॥ ५ यज्ञायज्ञावइत्यस्यागस्त्योमरुतोजगती ॥



आवोर्वाचःसुवितायरोदस्योर्महेववृत्यामवसेसुवृक्तिभिः ॥ विष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोःश्नप्त्रेस्थोविष्णोः
स्यूरसिविष्णोर्ध्रुवमसिवैष्णवमसिविष्णवेत्वा ॥ [1]प्रसद्योअग्नेअत्येष्यन्यानाविर्यस्मैचारुतमोबभूथ ॥ ईळेन्योमनुष्यो
विभावाप्रियोविशामतिथिर्मानुषाणां ॥ ॥ अथश्राद्धमंत्राः ॥ पवित्रवंतःपरिवाचमासतेपितैषांप्रत्नोअभिरक्षति
व्रतं ॥ महःसमुद्रंवरुणस्तिरोदधेधीराइच्छेकुर्धरुणेष्वारभं ॥ पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिविश्वतः ॥
अतप्ततनूर्नतदामोअश्नुतेश्रतासइद्वहंतस्तत्समाशत ॥ शरासःकुशरासोदर्भासःसैर्याउत ॥ मौंजाअदृष्टावैरिणाः
सर्वेसाकंन्यलिप्सत ॥ यवोसिधान्यराजोवावारुणोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतं ॥ तिलो
सिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःस्वधयापितृनिमाँल्लोकान्प्रीणयाहिनःस्वधानमः ॥ सहस्रशीर्षा०॥
नतमंहो० ॥ ममाग्नेवर्चो० ॥ तरत्समंदी० ॥ हंसःशुचिष० ॥ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्याश्चरामसि ॥
अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः ॥
ऋतेनसत्यमृतसापआयन्छुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचत
आहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥ एतोन्विं० ॥ ३ ॥ तरत्समंदीधावतिधारासुत

१ प्रसद्योअग्नइत्यस्यात्रेयोबुधगविष्ठिरावग्निस्त्रिष्टुप् ॥

स्यांधसः ॥ तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः ॥ तरत्स० ॥ ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्म
हे ॥ तरत्स० ॥ आययोस्त्रिंशतंतनासहस्राणिचदद्महे ॥ तरत्समंदीधावति ॥ ४ ॥ यावतीर्वैदेवतास्ताःसर्वावेदवि
दिब्राह्मणेवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणाति ॥ यवोसियव
यास्मद्द्वेषोयवयारातीः ॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपित
रोहवेषु ॥ विश्वेदेवासआगंतशृणुतामइमंहवं ॥ एदंबर्हिर्निषीदत ॥ विश्वेदेवाःशृणुतेमंहवंमेयेअंतरिक्षेयउपद्यवि
ष्ठ ॥ येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ यादिव्याआपःपृथिविसंबभूवुर्याअंतरिक्ष्याउतपा
र्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्योनाभवंतु ॥ धूरसिधूरधूर्वंतंधूर्वतंयोस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः ॥
उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥ पशूंश्चमह्यमावहजीवनंचदिशोदिश ॥ उशंतस्त्वानिधीमह्युशंतःसमिधीम
हि ॥ उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानि
षत्तायेवानूनंसुवृजनासुविक्षु ॥ पिशंगभृष्टिमंभृणंपिशाचिमिंद्रसंमृण ॥ सर्वंरक्षोनिबर्हय ॥ रक्षाणोअग्नेतवरक्षणेभी
रारक्षाणःसुमखप्रीणानः ॥ प्रतिष्फुरविरुजवीड्वंहोजहिरक्षोमहिचिद्वावृधानं ॥ ब्रह्मचतेजातवेदोनमश्चेयंचगीःसद
मिद्वर्धनीभूत् ॥ रक्षाणोअग्नेतनयानितोकारक्षोतनस्तन्वोअप्रयुच्छन् ॥ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआ



जातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ आमासुपक्वमैरयआसूर्यंरोहयोदिवि ॥ घर्मंन
सामंतपतासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत् ॥ सोमोधेनुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यंसभे
यंपितृश्रवणंयोददाशदस्मै ॥ उपह्वये० ॥ २ ॥ इंद्रद्दह्यंयामकोशाअभूवन्यज्ञायशिक्षगृणतेसखिभ्यः ॥ दुर्मायवोदुरे
वामर्त्यासोनिषंगिणोरिपवोहंत्वासः ॥ वाशीमंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमंतोनिषंगिणः ॥ स्वश्वास्थसुरथाः
पृश्निमातरःस्वायुधामरुतोयाथनाशुभं ॥ चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ॥ तस्यांसुपर्णावृषणानि
षेदतुर्यत्रदेवादधिरेभागधेयं ॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ॥ तंपाकेनमनसापश्यमंतित
स्तंमातारेळ्हिसउरेळ्हिमातरं ॥ सुपर्णंविप्राःकवयोवचोभिरेकंसंतंबहुधाकल्पयंति ॥ छंदांसिचदधतोअध्वरेषुग्रहा
न्त्सोमस्यमिमतेद्वादश ॥ १ ॥ [1]पितुंनुस्तोषंमहोधर्माणंतविषीं ॥ यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ स्वादोपि
तोमधोपितोवयंत्वावृमहे ॥ अस्माकमविताभव ॥ उपनःपितवाचरशिवःशिवाभिरूतिभिः ॥ मयोभुरद्विषेण्यः
सखासुशेवोअद्वयाः ॥ तवत्येपितोरसारजांस्यनुविष्ठिताः ॥ दिविवाताइवश्रिताः ॥ तवत्येपितोददतस्तवस्वादिष्ठ
तेपितो ॥ प्रस्वाद्मानोरसानांतुविग्रीवाइवेरते ॥ १ ॥ त्वेपितोमहानांदेवानांमनोहितं ॥ अकारिचारुकेतुनातवा

१ पितुंन्वित्येकादशर्चस्यसूक्तस्यागस्त्योन्नस्तुतिर्गायत्रीआद्यानुष्टुब्गर्भोष्णिक्तृतीयापंचम्याद्याअनुष्टुभोन्त्यानुष्टुब्बृहतीवा ॥

हिमवंसावधीत् ॥ यद्दोपिंतोऽअजंगन्विवस्वपर्वंतानां ॥ अत्रांचिंन्नोमधोपितोरंभक्षायंगम्याः ॥ यद्पामोषंधीनां परिंशमारिशामंहे ॥ वातांपेपीवऽइद्भंव ॥ यत्तेंसोमगवांशिरोयवांशिरोभजामहे ॥ वातांपेपीवऽइद्भंव ॥ करंभऽ औषधेभवपीवोंवृक्कउंदारथिः ॥ वातांपे० ॥ तंत्वांवयंपिंतोवचौभिर्गावोनहव्यासुंषूदिम ॥ देवेभ्यंस्त्वासधमादंम् स्मभ्यंत्वासधमादं ॥ २ ॥ कयांनश्चित्रऽआभुंवदूतीसदावृंधःसखा ॥ कयाशचिंष्ठयावृता ॥ कस्त्वांसत्योमदांनां मंहिंष्ठोमत्सदंधंसः ॥ दृह्वाचिंदारुजेवसु ॥ अभीषुणःसखींनामविताजंरितृणां ॥ शतंभंवास्यूतिभिः ॥ ३ ॥ नवा उंदेवाःक्षुधमिद्वधंदंदुरुताशिंतमुपंगच्छंतिमृत्यवंः ॥ उतोरयिःपृंणतोनोपंदस्यत्युतापृंणन्मर्डितारंनविंदते ॥ यआ ध्रायंचकमानायंपित्वोन्नंवान्त्सन्नंफितायोंपजग्मुषें ॥ स्थिरंमनंःकृणुतेसेवंतेपुरोतोचित्सर्मार्डितारंनविंदते ॥ सइद्भो जोयोगृहवेददात्यन्नंकामायचरंतेकृशायं ॥ अरंमस्मैभवतियामंहूताउतापरीषुंकृणुतेसखांयं ॥ नससखायोनददांति सख्यैसचाभुवेसचंमानायपित्वः ॥ अपांस्मात्प्रेयान्नतदोकोंअस्तिपृणंतमन्यमरंणंचिदिच्छेत् ॥ पृणीयादिंनाधंमाना यतव्यांद्राघीयांसमनुंपश्येतपंथां ॥ ओहिवर्तंतेरथ्यैवचक्रान्यमंन्यमुपंतिष्ठंतरायंः ॥ १ ॥ मोघमन्नंविंदतेअप्रंचेताः सत्यंब्रंवीमिवधइत्सतस्यं ॥ नार्यमणंपुष्यंतिनोसखांयंकेवंलाघोभवतिकेवलादी ॥ कृषन्नित्फालआशिंतंकृणोतियं

१ कयानइतितिसृणांवामदेवइंद्रोगायत्रीतृतीयापादनिचृत् ॥ २ नवाइतिनवर्चस्यसूक्तस्यांगिरसोभिक्षुधनान्नदानप्रशंसात्रिष्टुबाद्येद्वेजगत्यौ

नध्वांनमपंवृङ्क्तेचरित्रैः ॥ वदंन्ब्रह्मावंदतोवनीयान्पृणन्नापिरपृंणंतमभिष्यांत् ॥ एकंपाद्भूयोंद्विपदोविचंक्रमेद्विपा त्रिपादंमभ्यैतिपश्चात् ॥ चतुंष्पादेतिद्विपदांमभिस्वरेसंपश्यंन्पङ्क्तीरुंपतिष्ठंमानः ॥ समौचिद्धस्तौनसमंविंविष्टःसंमा तरांचिन्नसमंदुंहाते ॥ यमयोंश्चिन्नसमावीर्यांणिज्ञातीचित्संतौनसमंपृंणीतः ॥ २ ॥ स्वादोरंभक्षिवयंसःसुमेधाःस्वा ध्यौवरिवोवित्तंरस्य ॥ विश्वेयंदेवाऽउतमर्त्यासोमधुंब्रुवंतोऽअभिसंचरंति ॥ अंतश्चप्रागाऽअदिंतिर्भवास्यवयाताहरं सोदैव्यंस्य ॥ इंदविंद्रंस्यसख्यंजुंषाणःश्रौष्टींवधुरमनुंरायऽऋंध्याः ॥ अपांमसोमममृतांऽअभूमागंन्मज्योतिरविंदा मदेवान् ॥ किंनूनमस्मान्कृंणवदरांतिःकिमुंधूर्तिरंमृतमर्त्यंस्य ॥ शंनोंभवहृदऽआपीतऽइंदोपितेवंसोमसूनवेसुशेवंः॥ सखेवसख्यंऽउरुशंसधीरःप्रणऽआयुंर्जीवसेंसोमतारीः ॥ इमेमांपीतायशसंऽउरुष्यवोरथंनगावःसमंनाहपर्वंसु ॥ तेमांरक्षंतुविस्रसंश्चरित्रांदुतमास्रामांद्यवयंत्विंदंवः ॥ १ ॥ अग्निंनमांमथितंसंदिंदीपःप्रचंक्षयकृणुहिवस्यंसोनः ॥ अथाहितेमदऽआसोंममन्येरेवांऽइवप्रचंरापुष्टिमच्छं ॥ इषिरेणंतेमनंसासुतस्यंभक्षीमहिपित्र्यंस्येवरायः ॥ सोमंराज न्प्रणऽआयूँषितारीरहांनीवसूर्योंवासराणि ॥ सोमंराजन्मृळयांनःस्वस्तितवंस्मसिव्रत्या३स्तस्यंविद्धि ॥ अलंर्तिदक्षंऽ उतमन्युरिंदोमानोंऽअर्योंऽअनुकामंपरांदाः ॥ त्वंहिनंस्तन्वंःसोमगोपागात्रेंगात्रेनिषसत्थांनृचक्षाः ॥ यत्तेवयंप्रमि

१ स्वादोरभक्षीतिपंचदशर्चस्यसूक्तस्यकाण्वःप्रगाथःसोमस्त्रिष्टुप्पंचमीजगती ॥

नामंव्रतानिसनोमृळसुषखादेवस्यः ॥ ऋदूदरेणसख्यासचेययोमानरिष्येद्धर्यश्वपीतः ॥ अयंयःसोमोन्यधाय्यस्मे
तस्माइंद्रंप्रतिरमेम्यायुः ॥ २ ॥ अपत्याअस्थुरनिराअमीवानिरत्रसन्तमिषीचीरभैषुः ॥ आसोमोअस्माँऽअरुहद्वि
हायाऽअगन्मयत्रप्रतिरंतऽआयुः ॥ योनऽइंदुःपितरोहृत्सुपीतोमर्त्योमर्त्याँआविवेश ॥ तस्मैसोमायहविषाविधेमम्
ळीकेऽअस्यसुमतौस्याम ॥ त्वंसोमपितृभिःसंविदानोनुद्यावापृथिवीऽआततंथ ॥ तस्मैतऽइंदोहविषाविधेमवयंस्या
मपतयोरयीणां ॥ त्रातारोदेवाऽअधिवोचतानोमानोनिद्राऽईशतमोतजल्पिः ॥ वयंसोमस्यविश्वहप्रियासःसुवी
रासोविदथमावदेम ॥ त्वंनःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः ॥ त्वंनइंदऊतिभिःसजोषाःपाहिपश्चा
तादुतवापुरस्तात् ॥ ३ ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामस्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतांदोग्ध्री
धेनुर्वोढानड्वानाशुःसप्तिःपुरंधिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतांनिकामेनिकामेनःपर्जन्योव
र्षतुफलिन्योनओषधयःपच्यंतांयोगक्षेमोनःकल्पतां१येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितो
महिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वं ॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदः
स्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ कानिचिच्छ्राद्धसूक्तानिप्रयोगमंत्रांतेविन्यस्तानि ॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥
अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विंद्रतेहरी ॥ ( आ. सू. नमोवःपितरइषेनमोवःपितरऊर्जेनमोवःपित



रःशुष्मायनमोवःपितरोघोरायनमोवःपितरोजीवायनमोवःपितरोरसाय ॥ स्वधावःपितरोनमोवःपितरोनमएतायु
ष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतःस्याम ॥ ) मनोन्वाहुवामहेनाराशंसेनसोमेन ॥ पितॄणांचमन्मभिः ॥
आतएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातंसचेमहि॥
परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः ॥ दत्त्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छत ॥ ये
अग्निदग्धायेअनग्निदग्धामध्येदिवःस्वधयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व ॥ वाजेवाजे
वतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ यत्रतत्परमंपदं
विष्णोर्लोकेमहीयते ॥ देवैःसुकृतंकर्मभिस्तत्रमाममृतंकृधींद्रायेंदोपरिस्रव ॥ यत्रतत्परमाय्यंभूतानामधिपतिं ॥
भावभागीचयोगीचतत्रमा० ॥ यत्रगंगाचयमुनाचयत्रप्राचीसरस्वती ॥ यत्रसोमेश्वरोदेवस्तत्रमा० ॥ आमावाज
स्यप्रसवोजगम्यादाद्यावापृथिवीविश्वशंभू ॥ आमागंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ स्वादुषंसदः
पितरोवयोधाःकृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासः
पितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईशत ॥ इहैवस्तं
मावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ वसिष्ठासःपितृवद्वाचमक्रतदेवांईळानाऋषिव

त्स्वस्तयें ॥ प्रीताइंवज्ञातयः काममेत्यास्मेदेंवासोवंधूनुतावसुं ॥ देवान्वसिष्ठोअमृतान्ववंदेयेविश्वाभुवनाभिप्रंतस्थुः॥ तेनौरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ॥ इदंपितृभ्योनमोअस्त्वद्येतिनमस्कारवतीमंततःशंसतित स्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहावंपित्र्याःशंसे३त् ॥ अव्याहावां३इति ॥ व्याहावमेवशंसेदसंस्थितंवैपितृ यज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोव्याहावंशंसतितस्माद्व्याहावमेवशंस्तव्यं ॥ ॥ अथश्राद्धसूक्तानि ॥ इंद्रा[1]सोमातपतंरक्षंऽउब्जतंन्यर्पयतंवृषणातमोवृधः ॥ परांशृणीतमचितोन्योषतंहतंनुदेथांनिशिशीतमत्रिणः ॥ इंद्रा सोमासमघशंसमभ्यं१घंतपुर्ययस्तुचरुरंग्निवाँइव ॥ ब्रह्मद्विषेंक्रव्यादेंघोरचंक्षसेद्वेषोधत्तमनवायंकिमीदिनें ॥ इंद्रा सोमादुष्कृतोंवव्रेऽअंतरंनारंभणेतमंसिप्रविंध्यतं ॥ यथानातःपुनरेकश्चनोदयत्तद्वामस्तुसहंसेमन्युमच्छवंः ॥ इंद्रा सोमावर्तयंतंदिवोवधंसंपृथिव्याऽअघशंसायतहंणं ॥ उत्तंक्षतंस्वर्यं१पर्वतेभ्योयेनरक्षोंवावृधानंनिजूर्वंथः ॥ इंद्रासो मावर्तयंतंदिवस्पर्यग्नितप्तेभिर्युवमश्मंहन्मभिः ॥ तपुंर्वधेभिरजरेंभिरत्रिणोनिपर्शानेविध्यतंयंतुनिस्वरम् ॥ १ ॥

---

१ इंद्रासोमेतिपंचविंशत्यृचस्यसूक्तस्यवसिष्ठोरक्षोहणाविंद्रासोमौअष्टमीषोडशीएकोनविंशीविंश्येकविंशीद्वाविंशीचतुर्विंशीनामिंद्रः नवमीद्वादशीत्रयोदशीनांसोमःदशमीचतुर्दश्योरग्निःएकादश्यादेवाःसप्तदश्याग्रावाणःअष्टादश्यामरुतःत्रयोविंश्याःपूर्वार्धर्चस्यवसिष्ठःउ त्तरार्धर्चस्यपृथिव्यंतरिक्षंद्यौःआद्याःसप्ताष्टादश्येकविंशीत्रयोविंशीचजगत्योंत्यानुष्टुप्शिष्टास्त्रिष्टुभः ॥



इंद्रासोमापरिंवांभूतुविश्वतंऽइयंमतिःकक्ष्याश्वेंववाजिनां ॥ यांवांहोत्रांपरिहिनोमिंमेधयेमाब्रह्माणिनृपतींवजिन्वतं ॥ प्रतिंस्मरेथांतुजयंद्भिरेवैर्हतंद्रुहोरक्षसोंभंगुरावंतः ॥ इंद्रासोमादुष्कृतेमासुगंभूद्योनंःकदाचिंदभिदासंतिद्रुहा ॥ यो मापाकेंनमनंसाचरंतमभिचष्टेअनृतेभिर्वचोंभिः ॥ आपंइवकाशिनासंगृभीताऽअसंन्नस्त्वासंतइंद्रवक्ता ॥ येपांकशं संविहरंतऽएवैर्येवांभद्रंदूषयंतिस्वधाभिः ॥ अहंयेवातान्प्रददांतुसोमऽआवांदधातुनिर्ऋतेरुपस्थे ॥ योनोरसंदिप्सं तिपित्वोऽअंग्नेयोऽअश्वांनांयोगवांयस्तनूनां ॥ रिपुःस्तेनःस्तेयकृद्दभ्रमेंतुनिषहीयतांतन्वा३तनांच ॥ २ ॥ परःसो ऽअंस्तुतन्वा३तनांचतिस्रःपृथिवीरधोऽअंस्तुविश्वाः ॥ प्रतिंशुष्यतुयशोंऽअस्यदेवायोनोदिवादिप्संतियश्चनक्तं ॥ सुविज्ञानंचिंकितुषेजनांयसच्चासंच्चवचंसीपस्पृधाते ॥ तयोर्यत्सत्यंयंतरदृजीयस्तदित्सोमोंवतिहंत्यासंत् ॥ नवाऽउ सोमोंवृजिनंहिंनोतिनक्षत्रियंमिथुयाधारयंतं ॥ हंतिरक्षोहंत्यासद्वदंतमुभाविंद्रस्यप्रसिंतौशयाते ॥ यदिंवाहमनृंतदे वऽआसमोघंवादेवाँऽअप्यूहेऽअंग्ने ॥ किमस्मभ्यंजातवेदोहृणीषेद्रोघवाचंस्तेनिर्ऋथंसंचंतां॥ अद्यामुरीययदिंयातुधा नोऽअस्मियदिवायुस्ततपपूरुंषस्य ॥ अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याहं ॥ ३ ॥ योमायांतुंयातुधाने त्याहयोवांरक्षाःशुचिरस्मीत्याहं ॥ इंद्रस्तंहंतुमहतावधेनविश्वंस्यजंतोरंधमस्पदीष्ट ॥ प्रयाजिगांतिखर्गलेंवनक्तमपंद्रु हातन्वं१गूहंमाना ॥ वव्राँऽअनंताँऽअवसापंदीष्टग्रावांणोघ्नंतुरक्षसंऽउपब्दैः ॥ विंतिष्ठध्वंमरुतोविक्ष्वि१च्छतंगृभा

यतंरक्षसःसंपिनष्टन ॥ वयोयेभूत्वीपतयंतिनक्तभिर्येवारिपोंदधिरेदेवेऽध्वरे ॥ प्रवर्तयदिवोऽश्मानमिंद्रसोमशि
तंमघवन्त्संशिशाधि ॥ प्राक्तादपाक्तादधरादुदक्तादभिजंहिरक्षसःपर्वतेन ॥ एतऽउत्येपतयंतिश्वयातवऽइंद्रंदिप्संति
दिप्सवोदाभ्यं ॥ शिशीतेशक्रःपिशुनेभ्योवधंनूनंसृजदशनिंयातुमद्भ्यः ॥ ४ ॥ इंद्रोयातूनामभवत्पराशरोहविर्मथी
नामभ्याविवासतां ॥ अभीदुशक्रःपरशुर्यथावनंपात्रेवभिन्दन्त्सतऽएतिरक्षसः ॥ उलूकयातुंशुशुलूकयातुंजहिश्वया
तुमुतकोकयातुं ॥ सुपर्णयातुमुतगृध्रयातुंदृषदेवप्रमृणरक्षऽइंद्र ॥ मानोरक्षोऽअभिनड्यातुमावतामपोच्छतुमिथुनाया
किमीदिना ॥ पृथिवीनःपार्थिवात्पात्वंहसोंतरिक्षंदिव्यात्पात्वस्मान् ॥ इंद्रंजहिपुमांसंयातुधानमुतस्त्रियंमाययाशाश
दानां ॥ विग्रीवासोमूरदेवाऽऋदंतुमातेदृशन्त्सूर्यमुच्चरंतं ॥ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमश
निंयातुमद्भ्यः ॥५॥ रक्षोहणंपूर्वंगतं॥ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः ॥ असुंयऽईयुरवृकाऽऋ
तज्ञास्तेनोवंतुपितरोहवेषु ॥ इदंपितृभ्योनमोऽअस्त्वद्ययेपूर्वासोयऽउपरासऽईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवान्
नंसुवृजनासुविक्षु ॥ आहंपितॄन्त्सुविदत्राँऽअवित्सिनपातंचविक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपि
त्वस्तऽइहागमिष्ठाः ॥ बर्हिषदःपितरऽऊत्य१र्वागिमावोहव्याचकृमाजुषध्वं ॥ तऽआगतावसाशंतमेनाथानःशंयो

१ उदीरतामितिचतुर्दशर्चस्यसूक्तस्ययामायनःशंखःपितरस्त्रिष्टुबेकादशीजगती ॥

॥७०॥

ररपोदधात ॥ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तऽआगमंतुतऽइहश्रुवंत्वधिब्रुवंतुतेवंत्वस्मान् ॥
॥ १ ॥ आच्याजानुदक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे ॥ माहिंसिष्टपितरःकेनचिन्नोयद्वऽआगःपुरुषताकरा
म ॥ आसीनासोऽअरुणीनामुपस्थेरयिंधत्तदाशुषेमर्त्याय ॥ पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधात ॥ येनः
पूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः ॥ तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ येतातृषुर्देवत्राजे
हमानाहोत्राविदःस्तोमतष्टासोऽअर्कैः ॥ आग्नेयाहिसुविदत्रेभिरर्वाङ्सत्यैःकव्यैःपितृभिर्घर्मसद्भिः ॥ येसत्यासोह
विरदोहविष्पाऽइंद्रेणदेवैःसरथंदधानाः ॥ आग्नेयाहिसहस्रंदेववंदैःपरैःपूर्वैःपितृभिर्घर्मसद्भिः ॥ २ ॥ अग्निष्वात्ताः
पितरएहगच्छतसदःसदःसदतसुप्रणीतयः ॥ अत्ताहवींषिप्रयतानिबर्हिष्यथारयिंसर्ववीरंदधातन ॥ त्वमग्नईळितो
जातवेदोवाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवींषि ॥ येचेहपितरोयेचने
हयाँश्चविद्मयाँउंचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ येऽअग्निदग्धाऽयेऽअनग्निदग्धाम
ध्येदिवःस्वधयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व ॥ ३ ॥ अग्नेहंसिन्य१त्रिणंदीद्यन्मर्त्ये
ष्वा ॥ स्वेक्षयेशुचिव्रत ॥ उत्तिष्ठसिस्वाहुतोघृतानिप्रतिमोदसे ॥ यत्त्वास्रुचःसमस्थिरन् ॥ सऽआहुतोविरोचतेग्नि

१ अग्नेहंसीतिनवर्चस्यसूक्तस्यामहीयवउरुक्षयोरक्षोहाग्निर्गायत्री ॥

रीळेन्यौगिरा ॥ स्रुचाप्रतीकमज्यते ॥ घृतेनाग्निःसमंज्यतेमधुंप्रतीकुऽआहुतः ॥ रोचमानोविभावसुः ॥ जरमाणः
समिंध्यसेदेवेभ्यौहव्यवाहन ॥ तंत्वांहवंतमर्त्याः ॥ ३ ॥ तंमर्ताऽअमर्त्यंघृतेनाग्निंसपर्यत ॥ अदांभ्यंगृहपतिं ॥
अदांभ्येनशोचिषाग्नेरक्षस्त्वंदह ॥ गोपाऽऋतस्यंदीदिहि ॥ सत्वमंग्नेप्रतीकेनप्रत्यौषयातुधान्यः ॥ उरुक्षयेषुदीद्यंत्॥
तंत्वांगीर्भिरुरुक्षयांहव्यवाहंसमीधिरे ॥ यजिष्ठंमानुषेजने ॥ १ ॥ श्रद्धयाग्निःसमिध्यतेश्रद्धयांहूयतेहविः ॥ श्रद्धां
भगस्यमूर्धनिवचसावेदयामसि ॥ प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः ॥ प्रियंभोजेषुयज्वस्विदंमंउदितंकृधि ॥
यथांदेवाऽअसुरेषुश्रद्धामुग्रेषुचक्रिरे ॥ एवंभोजेषुयज्वस्वस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानावायुगोंपाउपांस
ते ॥ श्रद्धांहृदय्यं१याकूत्याश्रद्धयांविंदतेवसु ॥ श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि ॥ श्रद्धांसूर्यस्यनिम्रुचिश्रद्धे
श्रद्धांपयेहनः ॥ १ ॥ ब्रह्मणाग्निःसंविदानोरक्षोहाबांधतामितः ॥ अमीवायस्तेगर्भंदुर्णामायोनिमाशयें ॥ यस्तेगर्भ
ममीवादुर्णामायोनिमाशयें ॥ अग्निष्टंब्रह्मणासहनिष्क्रव्यादंमनीनशत् ॥ यस्तेहंतिपतयंतंनिषत्स्नुंयःसरीसृपं ॥ जा
तंयस्तेजिघांसतितमितोनांशयामसि ॥ यस्तंऊरूविहरत्यंतरादंपतीशयें ॥ योनिंयोऽअंतरारेह्रितमि० ॥ यस्त्वाभ्रा
तापतिर्भूत्वाजारोभूत्वानिपद्यंते ॥ प्रजांयस्तेजिघांसतितमि० ॥ यस्त्वास्वप्नेंनतमंसामोहयित्वानिपद्यंते ॥ प्रजांय

१ श्रद्धयेतिपंचर्चस्यसूक्तस्यकामायनीश्रद्धाश्रद्धानुष्टुप्।२ब्रह्मणाग्नीतिषळर्चस्यसूक्तस्यब्राह्मोरक्षोहागर्भसमाधानंगर्भस्रावेप्रायश्चित्तमनुष्टुप्।

स्ते० ॥ इतिश्राद्धसूक्तानि ॥ ॥ नासंदासीन्नोसदांसीत्तदानीनासीद्रजोनोव्यौमापरोयत् ॥ किमावंरीवःकुहक
स्यशर्मन्नंभःकिमांसीद्गहंनंगभीरं ॥ नमृत्युरांसीदमृतंनतर्हिनरात्र्याअह्नऽआसीत्प्रकेतः ॥ आनीदवातंस्वधयातदेकं
तस्मांद्धान्यंनपरःकिंचनास ॥ तमंऽआसीत्तमंसागूळ्हमग्रेप्रकेतंसंलिलंसर्वमाइदं ॥ तुच्छयेनाभ्वपिंहितंयदासीत्तप
सस्तन्महिनाजांयतैकं ॥ कामस्तदग्रेसमंवर्ततांधिमनंसोरेतंःप्रथमंयदासीत् ॥ सतोबंधुमसंतिनिरंविंदन्हृदिप्रती
ष्यांकवयौमनीषा ॥ तिरश्चीनोविततोरश्मिरेषामधःस्विदासी३दुपरिंस्विदासी३त् ॥ रेतोधाऽआंसन्महिमानंऽ
आसन्त्स्वधाअवस्तात्प्रयंतिःपरस्तांत् ॥ कोऽअद्धावेदकइहप्रवोंचत्कुतऽआजांताकुतंऽइयंविसृष्टिः ॥ अर्वाग्देवाऽ
अस्यविसर्जनेनाथाकोवेदयतंआबभूवं ॥ इयंविसृष्टिर्यतंऽआबभूवयदिंवादधेयदिंवान ॥ योऽअस्याध्यंक्षःपरमेव्यौ
मन्त्सोअंगवेदयदिंवानवेदं ॥ १ ॥ योयज्ञोविश्वतस्तंतुंभिस्ततएकंशतंदेवकर्मेभिरायंतः ॥ इमेवंयंतिपितरोयआंयु
युःप्रवयापंवयेत्यांसतेतते ॥ पुमाँएनंतनुतउत्कृंणत्तिपुमान्वितंत्नेऽअधिनाकेंऽअस्मिन् ॥ इमेमयूखाऽउपंसेदुरूस
दःसामांनिचक्रुस्तसंराण्योतंवे ॥ कासीत्प्रमाप्रतिमाकिंनिदानमाज्यंकिमांसीत्परिधिःकआंसीत् ॥ छंदःकिमांसी

१ नासदासीदितिसप्तर्चस्यसूक्तस्यपरमेष्ठीप्रजापतिर्भाववृत्तंत्रिष्टुप् ॥ २ योयज्ञइतिसप्तर्चस्यसूक्तस्यप्राजापत्योयज्ञोभाववृत्तंत्रिष्टु
बाद्याजगती ॥

त्यद्उग्रंकिमुक्थंयद्देवाद्देवमयजंतविश्वे ॥ अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहयासवितासंबभूव ॥ अनुष्टुभासोमउक्थैर्महस्वान्बृहस्पतेर्बृहतीवाचमावत् ॥ विराण्मित्रावरुणयोरभिश्रीरिंद्रस्यत्रिष्टुबिहभागोऽअह्नः ॥ विश्वान्देवान्जगत्याविवेशतेनचाक्लृप्रऋषयोमनुष्याः ॥ चाक्लृप्रेतेनऋषयोमनुष्यायज्ञेजातेपितरोनःपुराणे ॥ पश्यन्मन्येमनसाचक्षसातान्यइमंयज्ञमयजंतपूर्वे ॥ सहस्तोमाःसहच्छंदसऽआवृतःसहप्रमाऽऋषयःसप्तदैव्याः ॥ पूर्वेषापंथामनुदृश्यधीराऽअन्वालेभिरेरथ्योऽनरश्मीन् ॥ २ ॥ [1]नानानंवाऽउनोधियोविव्रतानिजनानां ॥ तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमिच्छतींद्रायेंदोपरिस्रव ॥ जरतीभिरोषधीभिःपर्णेभिःशकुनानां ॥ कार्मारोऽअश्मभिर्द्युभिर्हिरण्यवंतमिच्छतींद्रायें० ॥ कारुरहंततोभिषगुपलप्रक्षिणीनना ॥ नानाधियोवसूयवोनुगाऽइवतस्थिमेंद्रा० ॥ अश्वोवोढासुखंरथंहसनामुपमंत्रिणः ॥ शेपोरोमण्वंतौभेदौवारिन्मंडूकऽइच्छतींद्रा० ॥ १ ॥ [2]शर्यणावतिसोममिंद्रःपिबतुवृत्रहा ॥ बलंदधानऽआत्मनिकरिष्यन्वीर्यमहदिंद्रा० ॥ आपवस्वदिशांपतऽआर्जीकात्सोममीढ्वः ॥ ऋतवाकेनसत्येनश्रद्धयातपसासुतऽइंद्रा० ॥ पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् ॥ तंगंधर्वाःप्रत्यगृभ्णन्तंसोमेरसमादधुरिंद्रा० ॥ ऋतंवदन्नृतद्युम्नसत्यंवदन्त्सत्यकर्मन् ॥ श्रद्धांवदन्त्सोमराजन्धात्रासोमपरिष्कृतऽइंद्रा० ॥ सत्यमुग्रस्यबृहतःसंस्रवंतिसंस्रवाः ॥

[1] नानानमितिचतुर्ऋचस्यांगिरसःशिशुःपवमानसोमःपंक्तिः ॥ [2] शर्यणावतीत्येकादशर्चस्यसूक्तस्यमारीचःकश्यपःपवमानसोमःपंक्तिः ।



संयंतिरसिनोरसाःपुनानोब्रह्मणाहरऽइंद्रा० ॥ २ ॥ यत्रब्रह्मापवमानछंदस्यांऽवाचंवदन् ॥ ग्राव्णासोमेमहीयतेसोमेनानंदंजनयन्निंद्रा० ॥ यत्रज्योतिरजस्रंयस्मिन्लोकेस्वर्हितं ॥ तस्मिन्मांधेहिपवमानामृतेलोकेऽअक्षितऽइंद्रा० ॥ यत्रराजावैवस्वतोयत्रावरोधनंदिवः ॥ यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रायें० ॥ यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः ॥ लोकायत्रज्योतिष्मंतस्तत्र० ॥ यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपं ॥ स्वधाचयत्रतृप्तिश्चतत्रमाममृ० ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदऽआसते ॥ कामस्ययत्राप्ताःकामास्तत्रमाम० ॥ ३ ॥ ॥ अथपरिशिष्टं ॥ यत्रलोकास्तंनूत्यजाःश्रद्धयातपसाजिताः ॥ तेजश्चयत्रब्रह्माचतत्रमाममृ० ॥ यत्रदेवामहात्मानःसेंद्राश्चमरुद्गणाः ॥ ब्रह्माचयत्रविष्णुश्चतत्रमा० ॥ यत्रतत्परमंपदंविष्णोर्लोकेमहीयते ॥ देवैःसुकृतकर्मभिस्तत्रमा० ॥ यत्रतद्विष्णुर्महीयतेनराणांचनराधिपं ॥ यत्रशंखचक्रगदाधरःस्मरणंमुक्तिश्चतत्रमा० ॥ इतिपरिशिष्टं ॥ [1]यऽइंदोःपवमानस्यानुधामान्यक्रमीत् ॥ तमाहुःसुप्रजाऽइतियस्तेसोमाविधन्मनऽइंद्रा० ॥ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः ॥ सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रा० ॥ सप्तदिशोनानासूर्याःसप्तहोताराऋत्विजः ॥ देवाऽआदित्यायेसप्ततेभिःसोमाभिरक्षनऽइंद्रा० ॥ यत्तेराजन्छृतंहविस्तेनसोमाभिरक्षनः ॥ अरातीवामानस्तारीन्मोचनःकिंचनाममदिं

[1] यइंदोरितिचतुर्ऋचस्यसूक्तस्यकश्यपःपवमानसोमःपंक्तिः ॥

द्रायें० ॥ १ ॥ [1]अजैष्माद्यासनामचाभूमानागसोवयं ॥ जाग्रत्स्वप्नःसंकल्पःपापोयंद्विष्मस्तंसऽऋच्छतुयोनोद्वेष्टित मृच्छतु ॥ १ ॥ [2]देवाःकपोतऽइषितोयदिच्छन्दूतोनिऽर्ऋत्याऽइदमाजगाम ॥ तस्माऽअर्चामकृणवामनिष्कृतिंशं नोऽअस्तुद्विपदेशंचतुष्पदे ॥ शिवःकपोतऽइषितोनोऽअस्त्वनागादेवाःशकुनोगृहेषु ॥ अग्निर्हिविप्रोजुषतांहविर्नः परिहेतिःपक्षिणीनोवृणक्तु ॥ हेतिःपक्षिणीनदभात्यस्मानाष्ट्रीपदंकृणुतेऽअग्निधाने ॥ शंनोगोभ्यश्चपुरुषेभ्यश्चा स्तुमानोहिंसीदिहदेवाःकपोतः ॥ यदुलूकोवदतिमोघमेतद्यत्कपोतःपदमग्नौकृणोति ॥ यस्यदूतःप्रहितऽएषऽएतत्त स्मैयमायनमोऽअस्तुमृत्यवे ॥ ऋचाकपोतंनुदतप्रणोदमिषंमदंतःपरिगांनयध्वं ॥ संयोपयंतोदुरितानिविश्वाहित्वा नऽऊर्जंप्रपतात्पतिष्ठः ॥ १ ॥ [3]ऋषभंमासमानानांसपत्नानांविषासहिं ॥ हंतारंशत्रूणांकृधिविराजंगोपतिंगवां ॥ अहमस्मिसपत्नहेंद्रऽइवारिष्टोऽअक्षतः ॥ अधःसपत्नामेपदोरिमेसर्वेऽअभिष्ठिताः ॥ अत्रैववोपिनह्याम्युभेऽआर्त्नी ऽइवज्यया ॥ वाचस्पतेनिषेधेमान्यथामदधरंवदान् ॥ अभिभूरहमागमंविश्वकर्मेणधाम्ना ॥ आवश्चित्तमावोव्रत मावोहंसमितिंददे ॥ योगक्षेमंवऽआदायाहंभूयासमुत्तमऽआवोमूर्धानमक्रमीं ॥ अधस्पदान्मऽउद्वदतमंडूकाऽइवो

१ अजैष्मादित्यस्योषादुःस्वप्नघ्नीमहापंक्तिः ॥ २ देवाःकपोतइतिपंचर्चस्यसूक्तस्यनैर्ऋतःकपोतःकपोतोपहतौप्रायश्चित्तंविश्वेदेवा त्रिष्टुप् ॥ ३ ऋषभमितिपंचर्चस्यसूक्तस्यवैराजोऋषभःशाक्वरोवासपत्नघ्न्यनुष्टुबंत्यामहापंक्तिः ॥

दकान्मंडूकाउदकादिव ॥ १ ॥ [1]ईळेद्यावापृथिवीपूर्वचित्तयेग्निंघर्मंसुरुचंयामन्निष्टये ॥ याभिर्भरेकारमंशायजिन्व थस्ताभिरूषुऊतिभिरश्विनागतं ॥ युवोर्दानायसुभराअसश्चतोरथमातस्थुर्वचसंनमंतवे ॥ याभिर्धियोवथःकर्मन्निष्ट येताभिरूषु० ॥ युवंतासांदिव्यस्यप्रशासनेविशांक्षयथोअमृतस्यमज्मना ॥ याभिर्धेनुमस्वं१पिन्वथोनराताभिरू० ॥ याभिःपरिज्मातनयस्यमज्मनाद्विमातातूर्षुतरणिर्विभूषति ॥ याभिस्त्रिमंतुरभवद्विचक्षणस्ताभिरूषु० ॥ याभीरेभं निवृतंसितमद्भ्यउद्वंदनमैरयतंस्वर्दृशे ॥ याभिःकण्वंप्रसिषासंतमावतंताभिरूषुऊति० ॥ १ ॥ याभिरंतकंजसमान मारणेभुज्युंयाभिरव्यथिभिर्जिजिन्वथुः ॥ याभिःकर्कंधुंवय्यंचजिन्वथस्ताभिरू० ॥ याभिःशुचंतिंधनसांसुषंसदंत संघर्ममोम्यावंतमत्रये ॥ याभिःपृश्निगुंपुरुकुत्समावतंताभिरू० ॥ याभिःशचीभिर्वृषणापरावृजंप्रांधंश्रोणंचक्षसए तवेकृथः ॥ याभिर्वर्तिकांग्रसितामुंचतंताभिरू० ॥ याभिःसिंधुंमधुमंतमसश्चतंवसिष्ठंयाभिरजरावजिन्वतं ॥ याभिःकुत्संश्रुतर्यंनर्यमावतंताभि० ॥ याभिर्विश्पलांधनसामथर्व्यंसहस्रमीह्ळआजावजिन्वतं ॥ याभिर्वशमश्व्यंप्रे णिमावतंता० ॥ २ ॥ याभिःसुदानूऔशिजायवणिजेदीर्घश्रवसेमधुकोशोअक्षरत् ॥ कक्षीवंतंस्तोतारंयाभिरावतं ता० ॥ याभीरसांक्षोदसोद्नःपिपिन्वथुरनश्वंयाभीरथमावतंजिषे ॥ याभिस्त्रिशोकउस्रियाउदाजतताभि० ॥ या

१ ईळेद्यावेतिपंचविंशत्यृचस्यसूक्तस्यकुत्सोश्विनावाद्यौपादौद्यावापृथिव्यग्निर्जगत्यंत्येद्वेत्रिष्टुभौ ॥

भिःसूर्यंपरियाथःपरावतिमंधातारंक्षैत्रपत्येष्वावतं ॥ याभिर्विप्रंप्रभरद्वाजमावतंताभिं० ॥ याभिर्महामतिथिग्वंकं
शोजुवंदिवोदासंशंबरहत्यआवतं ॥ याभिःपूर्भिद्येत्रसदस्युमावतंताभिं० ॥ याभिर्वम्रंविपिपानमुपस्तुतंकलिंयाभि
र्वित्तजानिंदुवस्यथः ॥ याभिर्व्यश्वमुतपृथिमावतंताभिं० ॥ ३ ॥ याभिर्नराशयवेयाभिरत्रयेयाभिःपुरामनवेगातु
मीषथुः ॥ याभिःशारीराजतंस्यूमरश्मयेताभिं० ॥ याभिःपठर्वाजठरस्यमज्मनाग्निर्नादीदेच्चितइद्धोऽअज्मन्ना ॥
याभिःशर्यातमवथोमहाधनेताभिं० ॥ याभिरंगिरोमनसानिरण्यथोग्रंगच्छथोविवरेगोअर्णसः ॥ याभिर्मनुंशूरमि
षासमावतंताभिं० ॥ याभिःपत्नीर्विमदायन्यूहथुराघवायाभिररुणीरशिक्षतं ॥ याभिःसुदासऊहथुःसुदेव्यं१ता
भिं० ॥ याभिःशंतातीभवथोददाशुषेभुज्युंयाभिरवथोयाभिरध्रिगुं ॥ ओम्यावतींसुभरामृतस्तुभंताभिरू० ॥ ४ ॥
याभिःकृशानुमसनेदुवस्यथोजवेयाभिर्यूनोऽअर्वंतमावतं ॥ मधुप्रियंभरथोयत्सरड्भ्यस्ताभिं० ॥ याभिर्नरंगोषुयुधंनृ
षाह्येक्षेत्रस्यसातातनयस्यजिन्वथः ॥ याभीरथाँअवथोयाभिरर्वतस्ताभिरू० ॥ याभिःकुत्समार्जुनेयंशतक्रतूप्रतुर्वी
तिंप्रचदभीतिमावतं ॥ याभिर्ध्वसंतिंपुरुषंतिमावतंताभिरूषुऊतिभिं० ॥ अप्नस्वतीमश्विनावाचमस्मेकृतंनोदस्रावृ
षणामनीषां ॥ अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ द्युभिरक्तुभिःपरिपातमस्मानरिष्टेभिरश्विनासौ
भगेभिः ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ ५ ॥ शांतिप्रासादप्रतिष्ठादौमंत्राः ॥



अभित्वाशूरनोनुमोदुग्धाइवधेनवः ॥ ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुषः ॥ बृहदिंद्रायगायतमरुतोवृत्रहं
तमं ॥ येनज्योतिरजनयन्नृतावृधोदेवंदेवायजागृवि ॥ अद्यानोदेवसवितःप्रजावत्सावीःसौभगं ॥ परादुःष्वप्न्यंसुव ॥
विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुव ॥ यच्चगोषुदुष्वप्न्यंयच्चास्मेदुहितर्दिवः ॥ त्रितायतद्विभा
वर्याप्त्यायपरावहानेहसोवऊतयःसुऊतयोवऊतयः ॥ निष्कंवाघाकृणवतेस्रजंवादुहितर्दिवः ॥ त्रितेदुःष्वप्न्यंसर्वमा
प्त्येपरिदद्मस्यनेह० ॥ तदन्नायतदपसेतंभागमुपसेदुषे ॥ त्रितायचद्वितायचोषोदुःष्वप्न्यंवहाने० ॥ यथाकलांयथा
शफंयथऋणंसंनयामसि ॥ एवादुःष्वप्न्यंसर्वमाप्त्येसंनयामस्यने० ॥ अजैष्माद्यासनामचाभूमानागसोवयं ॥ उषोय
स्मादुःष्वप्न्याद्भैष्मापतदुच्छत्वनेह० ॥ १ ॥ वायोशतंहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपाज
सा ॥ बलंधेहितनूषुनोबलमिंद्रानळुत्सुनः ॥ बलंतोकायतनयायजीवसेत्वंहिबलदाऽअसि ॥ योमेराजन्युज्योवास
खावास्वप्नेभयंभीरवेमह्यमाह ॥ स्तेनोवायोदिप्सतिनोवृकोवात्वंतस्माद्वरुणपाह्यस्मान् ॥ नयस्यद्यावापृथिवीनधन्व

१ अभित्वाशूरनोनुमइत्यस्यवसिष्ठइंद्रःप्रगाथः ॥ २ बृहदिंद्रायगायतेत्यस्यांगिरसोनृमेधपुरुमेधाविंद्रःप्रगाथः ॥ ३ अद्यानोदेवेतिद्वयोः
श्यावाश्वःसवितागायत्री ॥ ४ यच्चगोष्वितिपंचानामुषादुःस्वप्नघ्नीमहापंक्तिः ॥ ५ वायोशतंगौतमोवायुरनुष्टुप् ॥ ६ बलंधेहीतिविश्वामि
त्रोरथांगस्तुतिर्बृहती ॥ ७ योमेराजन्नित्यस्यकूर्मोगृत्समदोवावरुणस्त्रिष्टुप् ॥ ८ नयस्यद्यावापृथिवीत्यस्यरेणुरिंद्रस्त्रिष्टुप् ॥

नांतरिक्षंनाद्रयःसोमोअक्षाः ॥ यदस्यमन्युरधिनीयमानःशृणातिवीळुरुजातिस्थिराणि ॥ [1]उच्चातेजातमंधसोदिविष द्भूम्याददे ॥ उग्रंशर्ममहिश्रवः ॥ [2]त्वामिद्धिहवामहेसातावाजस्यकारवः ॥ त्वांवृत्रेष्विंद्रसत्पतिंनरस्त्वांकाष्ठास्ववं तः ॥ [3]पिबासोममिंद्रमंदतुत्वायंतेसुषावहर्यश्वाद्रिः ॥ सोतुर्बाहुभ्यांसुयतोनार्वा ॥ [4]उद्घेदभिश्रुतामघंवृषभंनर्या पसं ॥ अस्तारमेषिसूर्य ॥ [5]तेमन्वतप्रथमंनामधेनोस्त्रिःसप्तमातुःपरमाणिविंदन् ॥ तज्जानतीरभ्यनूषतव्राआविर्भु वदरुणीर्यशसागोः ॥ [6]वास्तोष्पतेध्रुवास्थूणांसत्रंसोम्यानां ॥ द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखा ॥ [7]व्रातंव्रा तंगणंगणंसुशस्तिभिरग्नेर्भामंमरुतामोजईमहे ॥ पृषदश्वासोअनवभ्रराधसोगंतारोयज्ञंविदथेषुधीराः ॥ [8]शर्धंशर्धंव एषांव्रातंव्रातंगणंगणंसुशस्तिभिः ॥ अनुक्रामेमधीतिभिः ॥ [9]वयमुत्वापथस्पतेरथंनवाजसातये ॥ धियेपूषन्नयुज्म हि ॥ अभिनोनर्यंवसुवीरंप्रयतदक्षिणं ॥ वामंगृहपतिंनय ॥ अदित्संतंचिदाघृणेपूषन्दानायचोदय ॥ पणेश्चिद्विम्र

---

१ उच्चातइत्यस्यांगिरसोमहीयुःपनमानसोमोगायत्री ॥ २ त्वामिद्धीत्यस्यशंयुरिंद्रःप्रगाथोनुष्टुप् ॥ ३ पिबासोममित्यस्यवसिष्ठइंद्रोवि राट् ॥ ४ उद्घेदभीत्यस्यसुकक्षइंद्रोगायत्री ॥ ५ तेमन्वतेत्यस्यगोतमोवामदेवोग्निस्त्रिष्टुप् ॥ ६ वास्तोष्पतेध्रुवास्थूणेत्यस्येरिंबिठिरिंद्रोगा यत्री ॥ ७ व्रातंव्रातमित्यस्यविश्वामित्रोमरुतोजगती ॥ ८ शर्धंशर्धमित्यस्यश्यावाश्वोमरुतःककुप् ॥ ९ वयमुत्वापथस्पतइतिदशर्चस्यसू क्तस्यभरद्वाजःपूषागायत्रीअष्टम्यनुष्टुप् ॥



दामनः ॥ विपथोवाजसातयेचिनुहिविमृधोजहि ॥ साधंतामुग्रनोधियः ॥ परितृंधिपणीनामारयाहृदयाकवे ॥ अथेमस्मभ्यंरंधय ॥ १ ॥ विपूषन्नारयातुदपणेरिच्छहृदिप्रियं ॥ अथेमस्मभ्यं० ॥ आरिखकिकिराकृणुपणीनांहृद याकवे ॥ अथेमस्म० ॥ यांपूषन्ब्रह्मचोदनीमारांबिभर्ष्याघृणे ॥ तयासमस्यहृदयमारिखकिकिराकृणु ॥ यातेऽअ ष्ट्रागोऽओपशाघृणेपशुसाधनी ॥ तस्यास्तेसुम्नमीमहे ॥ उतनोगोषणिंधियमश्वसांवाजसामुत ॥ नृवत्कृणुहिवीतये॥ ॥ २ ॥ ऋतमृतवादिभ्योनमोदिवेनमःपृथिव्याइतिप्रस्तरेनिह्नवतेद्यावापृथिवीभ्यामेवतन्नमस्कुर्वन्त्यथोएनेवर्धयंत्ये ववर्धयंत्येव ॥ १ ॥ सहस्रमाख्यात्रेदद्याच्छतंप्रतिगरित्रएतेचैवासनेश्वेतश्चाश्वतरीरथोहोतुःपुत्रकामाहाप्याख्यापये रँल्लभंतेहपुत्राँल्लभंतेहपुत्रान् ॥ बृहत्सामक्षत्रभृद्वृद्धवृष्ण्यंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमि दंवातेनसगरेणरक्ष ॥ [1]संपूषन्विदुषानययोअंजसानुशासति ॥ यएवेदमितिब्रवत् ॥ समुपूष्णागमेमहियोगृहाँ अभिशासति ॥ इमएवेतिचब्रवत् ॥ पूष्णश्चक्रंनरिष्यतिनकोशोवपद्यते ॥ नोअस्यव्यथतेपविः ॥ योअस्मैहविषा विधन्नतंपूषापिमृष्यते ॥ प्रथमोविंदतेवसु ॥ पूषागाऽअन्वेतुनःपूषारक्षत्वर्वतः ॥ पूषावाजंसनोतुनः ॥ पूषन्ननुप्र गाइहियजमानस्यसुन्वतः ॥ अस्माकंस्तुवतामुत ॥ माकिर्नेशन्माकींरिषन्माकींसंशारिकेवटे ॥ अथारिष्टाभिरागं

---

१ संपूषन्नितिदशर्चस्यसूक्तस्यभरद्वाजःपूषागायत्री ॥

तिं ॥ १ ॥ त्वेषंगणंतवसंखादिहस्तंधुनिव्रतंमायिनंदातिवारं ॥ मयोभुवोयेऽअमितामहित्वावंदस्वविप्रतुविराधसोनृन् ॥ १ ॥ सोमारुद्राधारयेथामसुर्यं१प्रवामिष्टयोरमश्नुवंतु ॥ दमेदमेसप्तरत्नादधानाशंनोभूतंद्विपदेशंचतुष्पदे ॥ सोमारुद्राविवृहतंविषूचीममीवायानोगयमाविवेश ॥ आरेबाधेथांनिर्ऋतिंपराचैरस्मेभद्रासौश्रवसानिसंतु ॥ सोमारुद्रायुवमेतान्यस्मेविश्वातनूषुभेषजानिधत्तं ॥ अवस्यतंमुचतंयंनोअस्तितनूषुबद्धंकृतमेनोअस्मत् ॥ तिग्मायुधौतिग्महेतीसुशेवौसोमारुद्राविहसुमृळतंनः ॥ प्रनोमुंचतंवरुणस्यपाशाद्गोपायतंनःसुमनस्यमाना ॥ १ ॥ जीमूतस्येवभवतिप्रतीकंयद्वर्मीयातिसमदामुपस्थे ॥ अनाविद्धयातन्वाजयत्वंसत्वावर्मणोमहिमापिपर्तु ॥ धन्वनागाधन्वनाजिंजयेमधन्वनातीव्राःसमदोजयेम ॥ धनुःशत्रोरपकामंकृणोतिधन्वनासर्वाःप्रदिशोजयेम ॥ वक्ष्यंतीवेदागनीगंतिकर्णंप्रियंसखायंपरिषस्वजाना ॥ योषेवशिंक्तेविततधिधन्वन्ज्याऽइयंसमनेपारयंती ॥ तेऽआचरंतीसमनेवयोषा

१ त्वेषंगणमित्यस्यश्यावाश्वोमरुतस्त्रिष्टुप् ॥ २ सोमारुद्राइतिचतुर्ऋचस्यसूक्तस्यभरद्वाजःसोमारुद्रौत्रिष्टुप् ॥ ३ जीमूतस्येवेत्येकोनविंशत्यृचस्यसूक्तस्यपायुर्भारद्वाजःप्रथमादिक्रमेणवर्मधनुर्ज्याआर्त्नीइषुधिःषष्ठ्याःपूर्वार्धस्यसारथिरुत्तरार्धस्यरश्मयःअश्वाःरथःरथगोपाः-दशम्याब्राह्मणाःपितरोद्यावापृथिवीपूषाचततोद्वयोरिषवःप्रतोदःहस्तघ्नस्ततोद्वयोरिषवस्ततोब्रह्मणस्पतिरदितिश्चांत्येद्वेविश्वेदेवदेवताकेत्रिष्टुप्षष्ठीदशम्यौजगत्यौद्वादशीत्रयोदशीपंचदशीषोडश्यंत्यानुष्टुभःसप्तदशीपंक्तिः ॥



मातेवपुत्रंबिभृतामुपस्थे ॥ अपशत्रून्विध्यतांसंविदानेऽआर्त्नीऽइमेविष्फुरंतीऽअमित्रान् ॥ बह्वीनांपिता॰प्रसूतः ॥ रथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनांमहिमानंपनायतमनःपश्चादनुयच्छंतिरश्मयः ॥ तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिःसहवाजयंतः ॥ अवक्रामंतःप्रपदैरमित्रान्क्षिणंतिशत्रूँरनपव्ययंतः ॥ रथवाहनंहविरस्यनामयत्रायुधंनिहितमस्यवर्म ॥ तत्रारथमुपशग्मंसदेमविश्वाहावयंसुमनस्यमानाः॥स्वादुषंसदःपितरो॰ऋक् २ ॥ सुपर्णंवस्तेमृगोऽअस्यादंतोगोभिःसंनद्धापततिप्रसूता ॥ यत्रानरःसंचविचद्रवंतितत्रास्मभ्यमिषवःशर्मयंसन् ॥ ऋजीतेपरिवृङ्ग्धिनोश्मांभवतुनस्तनूः ॥ सोमोऽअधिब्रवीतुनोदितिःशर्मयच्छतु ॥ आजंघंतिसान्वेषांजघनाँऽउपजिघ्नते ॥ अश्वाजनिप्रचेतसोश्वान्त्समत्सुचोदय ॥ अहिरिवभोगैःपर्येतिबाहुंज्यायाहेतिंपरिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ आलाक्तायारुरुशीर्ष्ण्यथोयस्याऽअयोमुखं ॥ इदंपर्जन्यरेतसऽइष्वैदेव्यैबृहन्नमः ॥ ५ ॥ अवसृष्टापरापतशरव्येब्रह्मसंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषांकंचनोच्छिषः ॥ यत्रबाणाःसंपतंतिकुमाराविशिखाऽइव ॥ तत्रानोब्रह्मणस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु ॥ मर्माणितेवर्मणाछादयामिसोमस्त्वाराजामृतेनानुवस्तां ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयंतंत्वानुदेवामदंतु ॥ योनस्वोअरणो॰ऋ

क् ॥ १ ॥ [1]इमोऽअग्नेवीततमानिहव्याजस्रोवक्षिदेवतातिमच्छ ॥ प्रतिनऽईंसुरभीणिव्यंतु ॥ [2]त्वमग्नेसुहवोरण्वसंदृ
क्सुदीतीसूनोसहसोदिदीहि ॥ मात्वेसचातनयेनित्यऽआधङ्मावीरोऽअस्मन्नर्योविदासीत् ॥ मानोऽअग्नेदुर्भृतये
सचैषुदेवेद्धेष्वग्निषुप्रवोचः ॥ मातेऽअस्मान्दुर्मतयोभृमाच्चिद्देवस्यसूनोसहसोनशंत ॥ समर्तोऽअग्नेस्वनीकरेवानम
र्त्येयऽआजुहोतिहव्यम् ॥ सदेवतावसुवनिंदधातियंसूरिरर्थीपृच्छमानऽएति ॥ महोनोऽअग्नेसुवितस्यविद्वान्रयिं
सूरिभ्यऽआवहाबृहंतं ॥ येनवयंसहसावन्मदेमाविक्षितासऽआयुषासुवीराः ॥ नूमेब्रह्माण्यग्नऽउच्छशाधित्वंदेवमघ
वद्भ्यःसुषूदः ॥ रातौस्यामोभयासऽआतेयूयंपातस्वस्तिभिःसदानः ॥ १ ॥ [3]जुषस्वनःसमिधमग्नेऽअद्यशोचाबृहद्यज
तंधूममृण्वन् ॥ उपस्पृशद्दिव्यंसानुस्तूपैःसंरश्मिभिस्ततनःसूर्यस्य ॥ [4]यथावःस्वाहाग्नयेदाशेमपरीळाभिर्घृतवद्भिश्चह
व्यैः ॥ तेभिर्नोअग्नेऽअमितैर्महोभिःशतंपूर्भिरायसीभिर्निपाहि ॥ [5]नहिग्रभायारणःसुशेवोन्योदर्योमनसामंतवाऽउ॥
अधाचिदोकःपुनरित्सऽएत्यानोवाज्यभीषाळेतुनव्यः ॥ [6]प्रप्रायमग्निर्भरतस्यशृण्वेवियत्सूर्योनरोचतेबृहद्भाः ॥ अभि

१ इमोअग्नइत्यस्यमैत्रावरुणिर्वसिष्ठोग्निर्विराजः ॥ २ त्वमग्नेइतिपंचानांमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुप् ॥ ३ जुषस्वनइत्यस्यवसिष्ठआ-
प्रियोतनूनपात्रिष्टुप् ॥ ४ यथावस्वाहेत्यस्यवसिष्ठोग्निस्त्रिष्टुप् ॥ ५ नहिग्रभेतिवसिष्ठोग्निस्त्रिष्टुप् ॥ ६ प्रप्रायमग्निरित्यस्यवसिष्ठोग्निस्त्रिष्टुप् ॥



यःपूरुंपृतनासुतस्थौद्युतानोदैव्योऽअतिथिःशुशोच ॥ [1]अग्नेयाहिदूत्यंमारिषण्योदेवाँऽअच्छाब्रह्मकृतागणेन ॥ सर
स्वतींमरुतोऽअश्विनापोयक्षिदेवान्रत्नधेयायविश्वान् ॥ [2]अग्निरीशेबृहतोऽअध्वरस्याग्निर्विश्वस्यहविषःकृतस्य ॥ क्र
तुंह्यस्यवसवोजुषंताथादेवादधिरेहव्यवाहं ॥ [3]समिधाजातवेदसेदेवायदेवहूतिभिः ॥ हविर्भिःशुक्रशोचिषेनमस्विनो
वयंदाशेमाग्नये ॥ [4]देवोवोद्रविणोदाःपूर्णांविवष्ट्यासिचं ॥ उद्वासिंचध्वमुपवापृणध्वमादिद्वोदेवऽओहते ॥ [5]त्वेह्य
त्पितरश्चिन्नऽइंद्रविश्वावामाजरितारोऽअसन्वन् ॥ त्वेगावःसुदुघास्त्वेह्यश्वास्त्वंवसुदेवयतेवनिष्ठः ॥ [6]यस्तिग्मशृं
गोवृषभोनभीमऽएकःकृष्टीश्च्यावयतिप्रविश्वाः ॥ यःशश्वतोऽअदाशुषोगयस्यप्रयंतासिसुष्वितरायवेदः ॥ [7]सनाता
तऽइंद्रभोजनानिरातहव्यायदाशुषेसुदासे ॥ वृष्णेतेहरीवृषणायुनज्मिव्यंतुब्रह्माणिपुरुशाकवाजं ॥ मातेऽअस्यांस
हसावन्परिष्टावघायभूमहरिवःपरादै ॥ त्रायस्वनोवृकेभिर्वरूथैस्तवप्रियासःसूरिषुस्याम ॥ प्रियासऽइत्तेमघवन्नभि
ष्टौनरोमदेमशरणेसखायः ॥ नितुर्वशंनियाद्वंशिशीह्यतिथिग्वायशंस्यंकरिष्यन् ॥ सद्यश्चिन्नुतेमघवन्नभिष्टौनरःशं
संत्युक्थशासऽउक्था ॥ येतेहवेभिर्विपणीँरदाशन्नस्मान्वृणीष्वयुज्यायतस्मै ॥ एतेस्तोमानरांनृतमतुभ्यमस्मद्र्यंचोद

१ अग्नेयाहीत्यस्यवसिष्ठोग्निस्त्रिष्टुप् ॥ २ अग्निरीशेइतिवसिष्ठोग्निस्त्रिष्टुप् ॥ ३ समिधेतिवसिष्ठोग्निर्बृहती ॥ ४ देवोवइत्यस्यवसिष्ठो
ग्निःप्रगाथः ॥ ५ त्वेह्यदित्यस्यवसिष्ठइंद्रस्त्रिष्टुप् ॥ ६ यस्तिग्मशृंगइत्यस्यवसिष्ठइंद्रस्त्रिष्टुप् ॥ ७ सनाताेतिषण्णांवसिष्ठइंद्रस्त्रिष्टुप् ॥

दंतोमघानि ॥ तेषामिंद्रवृत्रहत्येशिवोभूःसखाचशूरोविताचनृणां ॥ नूऽइंद्रशूरस्तवमानऽऊतीब्रह्मजूतस्तन्वावावृधस्व ॥ उपनोवाजान्मिमीह्युपस्तीन्यूयंपातस्वस्तिभिःसदानः ॥ १ ॥ [1]उग्रोजज्ञेवीर्यायस्वधावान्चक्रिरपोनर्योयत्करिष्यन् ॥ जग्मिर्युवानृषदनमवोभिस्त्रातानऽइंद्रऽएनसोमहश्चित् ॥ [2]असाविदेवंगोऽऋजीकमंधोन्यस्मिन्निंद्रोजनुषेमुवोच ॥ बोधामसित्वाहर्यश्वयज्ञैर्बोधानःस्तोममंधसोमदेषु ॥ [3]पिबासोममिंद्रमंदतुत्वायंतेसुषावहर्यश्वाद्रिः ॥ सोतुर्बाहुभ्यांसुयतोनार्वा ॥ [4]उदुब्रह्माण्यैरतश्रवस्येंद्रंसमर्येमहयावसिष्ठ ॥ आयोविश्वानिशवसाततानोपश्रोतामऽईवतोवचांसि ॥ [5]एवेदिंद्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्चंत्यर्कैः ॥ सनःस्तुतोवीरवद्धातुगोमद्यूयंपातस्वस्तिभिःसदानः ॥ [6]इंद्रंनरोनेमधिताहवंतेयत्पार्यायुनजंतेधियस्ताः ॥ शूरोनृषाताशवसश्चकानऽआगोमतिव्रजेभजात्वंनः ॥ [7]अयंसोमऽइंद्रतुभ्यंसुन्वऽआतुप्रयाहिहरिवस्तदोकाः ॥ पिबात्व१स्यसुषुतस्यचारोर्ददोमघानिमघवन्नियानः ॥ [8]कातेऽअस्त्यरंकृतिःसूक्तैःकदानूनंतेमघवन्दाशेम ॥ विश्वामतीराततनेत्वायाधामऽइंद्रशृणवोहवेमा ॥ [9]वयंतेतऽइंद्रये

---

१ उग्रोजज्ञइत्यस्यवसिष्ठइंद्रस्त्रिष्टुप् ॥ २ असाविदेवमित्यस्यवसि० ॥ ३ पिबासोममित्यस्यवसिष्ठइंद्रोविराट् ॥ ४ उदुब्रह्माणीत्यस्यवसिष्ठइंद्रस्त्रिष्टुप् ॥ ५ एवेदिंद्रमित्यस्यवसि० ॥ ६ इंद्रंनरइत्यस्यवसिष्ठ० ॥ ७ अयंसोममित्यस्यवसिष्ठ० ॥ ८ कातइत्यस्यवसिष्ठ० ॥ ९ वयंतेतइत्यस्यवसिष्ठइंद्रस्त्रिष्टुप् ॥



चंदेवस्तवंतशूरददतोमघानि ॥ यच्छासूरिभ्यऽउपमंवरूथंस्वाभुवोजरणामश्नवंत ॥ [1]प्रवइंद्रायमादनंहर्यश्वायगायत ॥ सखायःसोमपाव्ने ॥ [2]मोषुत्वावाघतश्चनारेऽअस्मन्निरीरमन् ॥ आरात्ताच्चित्सधमादंनऽआगहीहवासन्नुपश्रुधि ॥ [3]अभित्वाशूरनोनुमोदुग्धाऽइवधेनवः ॥ ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुषः ॥ [4]अश्वावतीर्गोमतीर्नऽउषासोवीरवतीःसदमुच्छंतुभद्राः ॥ घृतंदुहानाविश्वतःप्रपीतायूयंपा० ॥ १ ॥ [5]आनोनियुद्भिःशतिनीभिरध्वरंसहस्रिणीभिरुपयाहियज्ञं ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्व० ॥ [6]सस्तुमातासस्तुपितासस्तुश्वासस्तुविश्पतिः ॥ ससंतुसर्वेज्ञातयःसस्त्वयमभितोजनः ॥ यऽआस्तेयश्चचरतियश्चपश्यतिनोजनः ॥ तेषांसंहन्मोऽअक्षाणियथेदंहर्म्यंतथा ॥ सहस्रशृंगोवृषभोयःसमुद्रादुदाचरत् ॥ तेनासहस्येनावयंनिजनान्त्स्वापयामसि ॥ प्रोष्ठेशयावह्येशयानारीर्यास्तल्पशीवरीः ॥ स्त्रियोयाःपुण्यगंधास्ताःसर्वाःस्वापयामसि ॥ [7]पूषागाअन्वेतुनःपूषारक्षत्वर्वतः ॥ पूषावाजंसनोतुनः ॥ [8]कथाराधामसखायःस्तोमंमित्रस्यार्यम्णः ॥ महिप्सरोवरुणस्य ॥ [9]उतनोहिर्बुध्न्यःशृणोत्वजएकपा

---

१ प्रवइंद्रायेत्यस्यवसिष्ठइंद्रोगायत्री ॥ २ मोषुत्वेतिवसिष्ठइंद्रःप्रगाथः ॥ ३ अभित्वाशूरइत्यस्यवसिष्ठ० ॥ ४ अश्वावतीरित्यस्यवसिष्ठउषास्त्रिष्टुप् ॥ ५ आनोनियुद्भिरित्यस्यवसिष्ठोवायुस्त्रिष्टुप् ॥ ६ सस्तुमातेतिचतसृणांवसिष्ठःप्रस्वापिन्यउपनिषदोनुष्टुप् ॥ ७ पूषागाइत्यस्यभरद्वाजःपूषागायत्री ॥ ८ कथाराधामेत्यस्यकण्वोवरुणमित्रार्यमणोगायत्री ॥ ९ उतनोहिर्बुध्न्यइत्यस्यऋजिश्वाविश्वेदेवास्त्रिष्टुप् ॥

त्पृथिवीसंमुद्रः ॥ विश्वेदेवाऋतावृधोहुवानास्तुतामंत्राःकविशस्ताअवंतु ॥ [1]समुद्रःसिंधूरजोअंतरिक्षमजएकंपात्तन यित्नुरर्णवः ॥ अहिर्बुध्न्यःशृणवद्वचांसिमेविश्वेदेवासउतसूरयोमम ॥ १ ॥ [2]यदर्जुनसारमेयदतःपिशंगयच्छसे ॥ वीवभ्राजंतऽऋष्टयऽउपस्रक्केषुबप्सतोनिषुस्वप ॥ स्तेनंरायसारमेयतस्करंवापुनःसर ॥ स्तोतृनिंद्रस्यरायसिकिमस्मा न्दुच्छुनायसेनिषुस्वप ॥ त्वंसूकरस्यदर्दृहितवदर्दर्तुसूकरः ॥ स्तोतृनिंद्रस्यराय० ॥ [3]इंद्राग्नीअवसागतमस्मभ्यंचर्ष णीसहा ॥ मानोदुःशंसईशत॥ [4]इंद्रायसुमदिन्तमंसोमंसोतावरेण्यम् ॥ शक्रऽएणंपीपयद्विश्वयाधियाहिन्वानंनवा जयुं ॥ [5]पिबात्वं१स्यगिर्वणःसुतस्यपूर्वपाऽइव ॥ परिष्कृतस्यरसिनऽइयमासुतिश्चारुर्मदायपत्यते ॥ [6]स्तुहिस्तुहीदे तेघातेमंहिष्ठासोमघोनां ॥ निंदिताश्वःप्रपथीपरमज्यामघस्यमेध्यातिथे ॥ आयदश्वान्वनन्वतःश्रद्धयाहंरथेरुहं ॥ उतवामस्यवसुनश्चिकेततियोऽअस्तियाद्वःपशुः ॥ यऽऋज्रामह्यंमामहेसहत्वचाहिरण्ययां ॥ एषविश्वान्यभ्यस्तुसौ भगासंगस्यस्वनद्रथः ॥ अधप्लायोगिरतिदासदन्यानासंगोऽअग्नेदशभिःसहस्रैः ॥ अधोक्षणोदशमह्यंरुशंतोनळाऽ

---

१ समुद्रःसिंधुरित्यस्यवसुकर्णोविश्वेदेवाजगती ॥ २ यदर्जुनेतितिसृणांवसिष्ठःप्रस्वापिन्यउपनिषदोबृहत्यः ॥ ३ इंद्राग्नीइत्यस्यवसिष्ठ इंद्राग्नीगायत्री ॥ ४ इंद्रायसुमदिंतममित्यस्यमेधातिथिमेध्यातिथींद्रोबृहती ॥ ५ पिबात्वेत्यस्यमेधातिथिमेध्यातिथींद्रोबृहती ॥ ६ स्तुहि स्तुहीतिपंचानांमेधातिथिमेध्यातिथीद्रोबृहत्यंत्येद्वेत्रिष्टुभौ ॥



इवसरसोनिरतिष्ठन् ॥ अन्वस्यस्थूरंददृशेपुरस्तादनस्थऽऊरुरवरंबमाणः ॥ शश्वतीनार्यभिचक्ष्याहसुभद्रमर्यभोजनं बिभर्षि ॥ [1]इदंवसोसुतमंधःपिबासुपूर्णमुदरं ॥ अनाभयिन्ररिमाते ॥ [2]वयमुत्वातदिदर्थाऽइंद्रत्वायंतःसखायः ॥ क ण्वाऽउक्थेभिर्जरंते ॥ [3]मोष्वं१द्यदुर्हणावान्त्सायंकरदारेऽअस्मत् ॥ अश्रीरऽइवजामाता ॥ [4]मर्ताऽअमर्त्यस्यतेभूरि नाममनामहे॥ विप्रासोजातवेदसः॥१॥ [5]विप्रंविप्रासोवसेदेवंमर्तासऊतये ॥ अग्निंगीर्भिर्हवामहे ॥ आतेवत्सोमनो यमत्परमाच्चित्सधस्थात् ॥ अग्नेत्वांकामयागिरा ॥ [6]दुर्गेचिन्नःसुगंकृधिगृणानऽइंद्रगिर्वणः ॥ त्वंचमघवन्वशः ॥१॥ [7]यद्वाग्वदंत्यविचेतनानिराष्ट्रीदेवानांनिषसादमंद्रा ॥ चतस्रऽऊर्जंदुदुहेपयांसिक्वस्विदस्याःपरमंजगाम ॥ देवींवाच मजनयंतदेवास्तांविश्वरूपाःपशवोवदंति ॥ सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ २ ॥ [8]सहस्रधारेववतेस मस्वरन्दिवोनाकेमधुजिह्वाऽअसश्चतः ॥ अस्यस्पशोननिमिषंतिभूर्णयःपदेपदेपाशिनःसंतिसेतवः ॥ [9]अद्रिभिःसुतो

---

१ इदंवसोइत्यस्यमेधातिथिःप्रियमेधश्चांगिरसोगायत्री ॥ २ वयमुत्वाइत्यस्यमेधातिथि० ॥ ३ मोष्वेत्यस्यमेधातिथि० ॥ ४ मर्ताअ मर्त्यस्येत्यस्यकाण्वोवत्सोग्निर्गायत्री ॥ ५ विप्रंविप्रासइतिद्वयोःकाण्वोवत्सोग्निर्गायत्री ॥ ६ दुर्गेचिन्नइतिसुकक्षेंद्रोगायत्री ॥ ७ यद्वा ग्वदंतीतिद्वयोर्भार्गवोवाकूत्रिष्टुप् ॥ ८ सहस्रधारेत्यस्यांगिरसःपवित्रःपवमानसोमोजगती ॥ ९ अद्रिभिःसुतइत्यस्यभार्गवःकविःपवमा नसोमोजगती ॥

मतिभिश्चनोहितःप्ररोचयन्रोदसीमातराशुचिः ॥ रोमाण्यव्यासमयाविधावतिमधोर्धारापिन्वमानादिवेदिवे ॥ १ ॥
[1]तपोष्पवित्रंवितंदिवस्पदेशोचंतोऽअस्यतंतवोव्यस्थिरन् ॥ अवंत्यस्यपवीतारमाशवोदिवस्पृष्ठमधितिष्ठंतिचेतसा ॥
अरूरुचदुषसःपृश्निरग्रियऽउक्षाबिभर्तिभुवनानिवाजयुः ॥ मायाविनोममिरेऽअस्यमाययानृचक्षसःपितरोगर्भमाद
धुः ॥ १ ॥ सस्रुषीस्तदपसोदिवानक्तंचसस्रुषीः ॥ वरेण्यक्रतूरहमादेवीरवसेहुवे ॥ १ ॥ अथअंत्येष्टिप्रयोगोपयुक्त
विशेषमंत्राः ॥ [2]परेयिवांसंप्रवतोमहीरनुबहुभ्यःपंथामनुपस्पशानं ॥ वैवस्वतंसंगमनंजनानांयमंराजानंहविषादुव
स्य ॥ [3]इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामादय
स्व ॥ [4]अंगिरसोनःपितरोनवग्वाऽअथर्वाणोभृगवःसोम्यासः ॥ तेषांवयंसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥
प्रेहिप्रेहिपथिभिःपूर्व्येभिर्यत्रानःपूर्वेपितरःपरेयुः ॥ उभाराजानास्वधयामदंतायमंपश्यासिवरुणंचदेवं ॥ संगच्छस्व
पितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन् ॥ हित्वायावद्यंपुनरस्तमेहिसंगच्छस्वतन्वासुवर्चाः ॥ अपेतवीतविचसर्पताऽतो

१ तपोष्पवित्रमितिद्वयोरांगिरसःपवित्रःपवमानसोमोजगती ॥ २ परेयिवांसमित्यस्यवैवस्वतोयमोयमस्त्रिष्टुप् ॥ ३ इमंयममित्यस्य वैवस्वतोयमोयमस्त्रिष्टुप् ॥ ४ अंगिरसोनइत्यादिसप्तानांवैवस्वतोयमःआद्यायाःपितरःद्वितीयादितिसृणांपितरोवापंचम्यादितिसृणां श्वानौत्रिष्टुप् ॥

स्माएतंपितरोलोकमक्रन् ॥ अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यवसानमस्मै ॥ अतिद्रवसारमेयौश्वानौचतुरक्षौश
बलौसाधुनापथा ॥ अथापितॄन्त्सुविदत्राँऽउपेहियमेनयेसधमादंमदंति ॥ १ ॥ यौतेश्वानौयमरक्षितारौचतुरक्षौ
पथिरक्षीनृचक्षसौ ॥ ताभ्यामेनंपरिदेहिराजन्त्स्वस्तिचास्माऽअनमीवंचधेहि ॥ उरूणसावसुतृपाउदुंबलौयमस्यदू
तौचरतोजनाँऽअनु ॥ तावस्मभ्यंदृशयेसूर्यायपुनर्दातामसुमद्येहभद्रं ॥ १ ॥ दिविजाताअप्सुजातायाजाताओष
धीभ्यः ॥ अथोयाअग्निजाआपस्तानःशुंधंतुशुंधनीः ॥ [1]मैनमग्नेविदहोमाभिशोचोमास्यत्वचंचिक्षिपोमाशरीरं ॥ य
दाशृतंकृणवोजातवेदोथेमेनंप्रहिणुतात्पितृभ्यः ॥ शृतंयदाकरसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः ॥ यदागच्छा
त्यसुनीतिमेतामथादेवानांवशनीर्भवाति ॥ सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा ॥ अपोवा
गच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरीरैः ॥ अजोभागस्तपसातंतपस्वतंतेशोचिस्तपतुतंतेऽअर्चिः ॥ यास्तेशि
वास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकं ॥ अवसृजपुनरग्नेपितृभ्योयस्तआहुतश्चरतिस्वधाभिः ॥ आयुर्वसानऽउ
पवेतुशेषःसंगच्छतांतन्वाजातवेदः ॥ ४ ॥ यत्तेकृष्णःशकुनऽआतुतोदपिपीलःसर्पउतवाश्वापदः ॥ अग्निष्टद्विश्वाद
गदंकृणोतुसोमश्चयोब्राह्मणाँऽआविवेश ॥ अग्नेर्वर्मपरिगोभिर्व्ययस्वसंप्रोर्णुष्वपीवसामेदसाच ॥ नेत्त्वाधृष्णुर्हरसा

१ मैनमग्नइतिदशानांयामायनोदमनोग्निस्त्रिष्टुप् ।

जहृषाणोदधृग्विधक्ष्यन्पर्यङ्खयाते ॥ इममंग्नेचमसंमाविजिह्वरःप्रियोदेवानामुतसोम्यानां ॥ एषयश्चमसोदेवपानस्त स्मिन्देवाऽअमृतामादयंते ॥ क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः ॥ इहैवायमितरोजातवेदादेवेभ्यो हव्यंवहतुप्रजानन् ॥ योऽअग्निःक्रव्यात्प्रविवेशवोगृहमिमंपश्यन्नितरंजातवेदसं ॥ तंहरामिपितृयज्ञायदेवंसघर्ममिं न्वात्परमेसधस्थे ॥ ५ ॥ [1]उशंतस्त्वानिधीमह्युशंतःसमिधीमहि ॥ उशन्नुशतऽआवहपितॄन्हविषेऽअत्तवे ॥ शीतिके शीतिकावतिह्लादिकेह्लादिकावति ॥ मंडूक्याऽ३ुसुसंगमऽइमंस्व१ग्निंहर्षय ॥ [2]पूषात्वेतश्च्यावयतुप्रविद्वाननष्टपशुर्भुव नस्यगोपाः ॥ सत्वैतेभ्यःपरिददत्पितृभ्योग्निर्देवेभ्यःसुविदत्रियेभ्यः ॥ आयुर्विश्वायुःपरिपासतित्वापूषात्वापातुप्रप थेपुरस्तात् ॥ यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसविताद्धातु ॥ पूषेमाआशाअनुवेदसर्वाःसोऽअस्माँऽअभयत मेननेषत् ॥ स्वस्तिदाऽआघृणिःसर्ववीरोप्रयुच्छन्पुरएतुप्रजानन् ॥ प्रपथेपथामजनिष्टपूषाप्रपथेदिवःप्रपथेपृथि व्याः ॥ उभेऽअभिप्रियतमेसधस्थेआचपराचचरतिप्रजानन् ॥ १ ॥ [3]आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनं तु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ [4]परंमृत्योऽअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ चक्षु

१ उशंतइत्यस्यशीतिकेशीत्यस्यचयामायनोदमनोग्निरनुष्टुप् ॥ २ पूषात्वेतइत्यादिचतसृणांयमोयामायनोदेवश्रवापूषात्रिष्टुप् ॥ ३ आपोअस्मानित्यस्ययमोयामायनोदेवश्रवाआपस्त्रिष्टुप् ॥ ४ परंमृत्योइतिचतसृणांयामायनःसंकुसुकोमृत्युस्त्रिष्टुप् ॥

---

ष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् ॥ मृत्योःपदंयोपयंतोयदैतद्राघीयआयुःप्रतरंदधानाः ॥ आप्या यमानाःप्रजयाधनेनशुद्धाःपूताभवतयज्ञियासः ॥ इमेजीवाविमृतैराववृत्रन्नभूद्भद्रादेवहूतिर्नोऽअद्य ॥ प्रांचोऽअ गामनृतयेहसायद्राघीयआयुःप्रतरंदधानाः ॥ इमंजीवेभ्यःपरिधिंदधामिमैषांनुगादपरोऽअर्थमेतं ॥ शतंजीवंतुश रदःपुरूचीरंतर्मृत्युंदधतांपर्वतेन ॥ २ ॥ [1]इमानारीरविधवाःसुपत्नीरांजनेनसर्पिषासंविशंतु ॥ अनश्रवोनमीवाःसुर त्नाआरोहंतुजनयोयोनिमग्रे ॥ उदीर्ष्वनार्यभिजीवलोकंगतासुमेतमुपशेषएहि ॥ हस्तग्राभस्यदिधिषोस्तवेदंपत्युर्ज नित्वमभिसंबभूथ ॥ [2]उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां ॥ ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनि र्ऋतेरुपस्थात् ॥ उच्छ्वंचस्वपृथिविमानिबाधथाःसूपायनास्मैभवसूपवंचना ॥ मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि ॥ उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयंतां ॥ तेगृहासोघृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र ॥ उत्तेस्त भ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोअहंरिषं ॥ एतांस्थूणांपितरोधारयंतुतेत्रायमःसादनातेमिनोतु ॥ प्रतीचीने

१ इमानारीरितिद्वयोर्यामायनःसंकुसुकःपितृयज्ञस्त्रिष्टुप् ॥ २ उपसर्पेतिपंचानांयामायनःसंकुसुकःपितृयज्ञदेवतांत्याप्रजापति र्वात्रिष्टुप्द्वितीयाप्रस्तारपंक्तिःचतुर्थीजगत्यंत्यानुष्टुप् ॥

मामहनीष्वाःपर्णमिवादधुः ॥ प्रतीचींजग्रभावाचमश्वंरशनयायथा ॥ ४ ॥ [1]निवर्तध्वंमानुगातास्मान्त्सिषक्तरेवतीः ॥ अग्नींषोमापुनर्वसूऽअस्मेधारयतंरयिं ॥ पुनरेनानिवर्तयपुनरेनान्याकुरु ॥ इंद्रएणानियच्छत्वग्निरेनाउपाजतु ॥ पुनरेतानिवर्ततामस्मिन्पुष्यंतुगोपतौ ॥ इहैवाग्नेनिधारयेहतिष्ठतुयारयिः ॥ यन्नियानंन्ययनंसंज्ञानंयत्परायणं ॥ आवर्तनंनिवर्तनंयोगोपाऽअपितंहुवे ॥ यउदानड्व्ययनंयउदानट्परायणं ॥ आवर्तनंनिवर्तनमपिगोपानिवर्ततां ॥ आनिवर्तनिवर्तयपुनर्नइंद्रगादेहि ॥ जीवाभिर्भुनजामहै ॥ परिवोविश्वतोदधऽऊर्जाघृतेनपयसा ॥ येदेवाःकेचयज्ञियास्तेरय्यासंसृजंतुनः ॥ आनिवर्तनवर्तयनिनिवर्तनवर्तय ॥ भूम्याश्चतस्रःप्रदिशस्ताभ्यएनानिवर्तय ॥ ॥ १ ॥ [2]भद्रंनोऽअपिवातयमनः ॥ १ ॥ [3]एमाऽअग्मन्रेवतीर्जीवधन्याऽअध्वर्यवःसादयतासखायः ॥ निबर्हिषिधत्तनसोम्यासोपांनप्त्रासंविदानासऽएनाः ॥ आग्मन्नापऽउशतीर्बर्हिरेदंन्यध्वरेऽअसदन्देवयंतीः ॥ अध्वर्यवःसुनुतेंद्रायसोममभूदुवःसुशकादेवयज्या ॥ ४ ॥ [4]प्रसुग्मंताधिय० ऋ० १ ॥ वींद्रयासिदिव्यानिरोचनाविपार्थिवानिर

१ निवर्तध्वमित्यष्टर्चस्यसूक्तस्ययामायनोमथितोभृगुर्वारुणिर्भार्गवश्च्यवनोवाआपोवागौर्वानुष्टुबाद्यस्योत्तरार्धर्चस्याग्नीषोमौवाषष्ठीगायत्री ॥ २ भद्रंनइत्यस्यैंद्रोविमदःप्राजापत्योवावासुक्रोवसुकृद्वाग्न्येकपदाविराट् ॥ ३ एमाअग्मन्निति द्वयोरैलूषःकवषआपोपान्नपाद्वात्रिष्टुप् ॥ ४ प्रसुग्मंतेतिनवर्चस्यसूक्तस्यकवषइंद्रस्त्रिष्टुबाद्याःपंचजगत्यः ॥

जंसापुरुष्टुत ॥ येत्वावहंतिमुहुरध्वराँऽउपतेसुवन्वंतुवग्वनाँऽअराधसः ॥ तदिन्मेच्छन्त्सद्वपुषोवपुष्टरंपुत्रोयज्जानंपित्रोरधीयति ॥ जायापतिंवहतिवग्नुनासुमत्पुंसऽइद्भद्रोवहतुःपरिष्कृतः ॥ तदित्सधस्थमभिचारुदीधयगावोयच्छासन्वहतुंनधेनवः ॥ मातायन्मंतुर्यूथस्यपूर्व्याभिवाणस्यसप्तधातुरिज्जनः ॥ प्रवोच्छारिरिचेदेवयुष्पदमेकोरुद्रेभिर्यातितुर्वणिः ॥ जरावायेष्वमृतेषुदावनेपरिवऽऊमेभ्यःसिंचतामधु ॥५ ॥ निधीयमानमपगूळ्हमप्सुप्रमेदेवानांव्रतपाऽउवाच ॥ इंद्रोविद्वाँऽअनुहित्वाचचक्षतेनाहमग्नेऽअनुशिष्टऽआगां ॥ अक्षेत्रवित्क्षेत्रविदंह्यप्राट्सप्रैतिक्षेत्रविदानुशिष्टः ॥ एतद्वैभद्रमनुशासनस्योतस्रुतिंविंदत्यंजसीनां ॥ अद्येदुप्राणीदममन्निमाहापीवृतोऽअधयन्मातुरूधः ॥ एमेनमापजरिमायुवानमहेळन्वसुःसुमनाबभूव ॥ एतानिभद्राकलशक्रियामकुरुश्रवणददतोमघानि ॥ दानऽइद्वोमघवानःसोऽअस्त्वयंचसोमोहृदियंबिभर्मि ॥ [1]जीवंरुदंतिविमयंतेऽअध्वरेदीर्घामनुप्रसितिंदीधियुर्नरः ॥ वामंपितृभ्योऽयइदंसमेरिरेमयःपतिभ्योजनयःपरिष्वजे ॥ [2]त्वंविश्वादधिषेकेवलानियान्याविर्याचगुहावसूनि ॥ काममिन्मेमघवन्माविताारिस्त्वमाज्ञातात्वमिंद्रासिदाता ॥ [3]माप्रगामपथोवयंमायज्ञादिंद्रसोमिनः ॥ मांतस्थुर्नोऽअरातयः ॥ यो

१ जीवंरुदंतीत्यस्यघोषाश्विनौजगती ॥ २ त्वंविश्वेत्यस्यवामदेवोबृहदुक्थइंद्रस्त्रिष्टुप् ॥ ३ माप्रगामेतिद्वयोर्गौपायनाबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चविश्वेदेवागायत्री ॥

यज्ञस्यंप्रसाधंनस्तंतुर्देवेष्वाततः ॥ तमाहुतंनशीमहि ॥ १ ॥ [1]यत्तेयमंवैवस्वतंमनोंजगामंदूरकम् ॥ तत्तआवर्तयाम सीहक्षयांयजीवसें ॥ यत्तेदिवंयत्पृथिवींमनोंज० ॥ तत्तआ० ॥ यत्तेभूमिंचतुर्भृष्टिंमनोंज० ॥ तत्त० ॥ यत्तेचतं स्रःप्रदिशोमनोंज० ॥ तत्त० ॥ यत्तेसमुद्रमंर्णवंमनोंज० ॥ तत्तआ० ॥ यत्तेमरींचिःप्रवतोमनों० ॥ तत्त० ॥ १ ॥ यत्तेंअपोयदोषंधीर्ममनों० ॥ तत्त० ॥ यत्तेसूर्यंयदुषसंमनोंज० ॥ तत्तआ० ॥ यत्तेपर्वंतान्बृहतोमनों० ॥ तत्त० ॥ यत्तेविश्वंमिदंजगन्मनों० ॥ तत्त०॥ यत्तेपराःपरावतोमनोंज० ॥ तत्तआ० ॥ यत्तेंभूतंचभव्यंचमनों० ॥ तत्त० ॥ ॥ २ ॥ [2]प्रेतार्यायुःप्रतरंनवींयःस्थातांरेवक्रतुंमतारथंस्य ॥ अधच्यवांनउत्तंवीत्यर्थंपरातरंसुनिर्ऋंतिर्जिहीतां ॥ सा मन्नुरायेनिंधिमंन्वन्नंकरांमहेसुपुरुधश्रवांसि ॥ तानोविश्वांनिजरितामंमत्तुपरातरं० ॥ अभीष्वं१र्यःपौंस्यैर्भवेमद्यौ र्नभूमिंगिरयोनाज्रान् ॥ तानोविश्वांनिजरिताचिंकेतपरा० ॥ मोषुणंःसोममृत्यवेपरांदाःपश्येंमनुसूर्यंमुच्चरंतं ॥ द्यु भिर्हितोजंरिमासूनोंअस्तुपरा० ॥ असुंनीतेमनोंअस्मासुंधारयजीवातंवेसुप्रतिरानआयुः ॥ रारंधिनःसूर्यस्यसंदृशि घृतेनत्वंतन्वंवर्धयस्व ॥ १ ॥ असुंनीतेपुनंरस्मासुचक्षुःपुनंःप्राणमिहनोंधेहिभोगं ॥ ज्योक्पंश्येमसूर्यंमुच्चरंतमनुंमते

१ यत्तेयममितिद्वादशर्चस्यसूक्तस्यबंध्वादयोमनआवर्तनमनुष्टुप् ॥ २ प्रतारीतिदशर्चस्यसूक्तस्यबंध्वादयःचतसृणांनिर्ऋतिश्चतुर्थ्याः सोमश्चपंचमीषष्ठ्योरसुनीतिःसप्तम्यालिंगोक्तादेवतास्ततस्तिसृणांद्यावापृथिवीत्रिष्टुप्अष्टम्यादीनांपंक्तिमहापंक्तिपंक्तिपंक्त्युत्तराः ॥

मृळयांनःस्वस्ति ॥ पुनंर्नोंऽअसुंपृथिवीदंदातुपुनर्द्यौर्देवीपुनंरंतरिंक्षं ॥ पुनंर्नःसोमंस्तन्वंददातुपुनंःपूषापथ्यां३यास्व स्तिः ॥ शंरोदंसीसुबंधवेयह्वीऋतस्यंमातरां ॥ भरंतामपयद्रपोद्यौःपृथिविक्षमारपोमोषुतेकिंचनामंमत् ॥ अवंद्वके अवंत्रिकादिवश्चरंतिभेषजा ॥ क्षमाचंरिष्णवेंकंकंभरंताम० ॥ समिंद्रेरयगामंनड्वाहंयआवंहदुशीनरांण्याअनंः ॥ भरंता० ॥ [1]आजनंत्वेषसंदृशंमाहींनानामुपंस्तुतं ॥ अगंन्मबिभ्रंतोनमंः ॥ १ ॥ [2]देवानांनुवयंजानाप्रवोंचामवि पन्ययां ॥ उक्थेषुंशस्यमांनेषुयःपश्यादुत्तंरेयुगे ॥ ब्रह्मंणस्पतिंरेतासंकर्मारंऽइवाधमत् ॥ देवानांपूर्व्येयुगेसंतःसदं जायत ॥ देवानांयुगेप्रंथमेसंतःसदंजायत ॥ तदाशाऽअन्वंजायंततदुत्तानपंदस्परिं ॥ भूर्जंज्ञउत्तानपंदोभुवऽआ शांऽअजायंत ॥ अदिंतेर्दक्षोंऽअजायतदक्षाद्वदिंतिःपरिं ॥ अदिंतिर्ह्यजंनिष्टदक्षयादुंहितातवं ॥ तांदेवाऽअन्वंजा यंतभद्राऽअमृतंबंधवः ॥ १ ॥ सितासिंतेसरितेयत्रंसंगथेतत्रांप्लुतासोदिवमुत्पंतंति ॥ येवैतन्वं१विसृजंतिधीरास्ते जनांसोऽअमृतत्वंभंजंते ॥ [3]विहिसोतोरसृक्षतनेंद्रंदेवमंमंसत ॥ यत्रामंदद्वृषाकंपिरर्यःपुष्टेषुमत्संखाविश्वंस्मादिंद्रऽउ त्तंरः ॥ पराहींद्रधावंसिवृषाकंपेरतिव्याथिंः ॥ नोऽअहप्रविंदस्यन्यत्रसोमंपीतयेविश्वंस्मा० ॥ किमयंत्वांवृषाकंपिश्च

१ आजनमित्यस्यबंध्वादयोगौपायनाअसमातिर्गायत्री ॥ २ देवानामितिपंचानांलौक्योबृहस्पतिरांगिरसोवादाक्षायण्यदितिर्वादे वाअनुष्टुप् ॥ ३ विहिसोतोरितित्रयोविंशत्यृचस्यसूक्तस्यैंद्रोवृषाकपिरिंद्राणींद्रश्चपंक्तिः ॥

कारहरितोमृगः ॥ यस्माऽइरस्यसीदुन्व१र्योवापुष्टिमद्वसुविश्वस्मा० ॥ यमिमंत्वंवृषाकपिंप्रियामिंद्राभिरक्षसि ॥ श्वान्वस्यजंभिषदपिकर्णेवराहयुर्विश्वस्मा० ॥ प्रियातष्टानिमेकपिर्व्यक्ताव्यदूदुषत् ॥ शिरोन्वस्यराविषंनसुगंदुष्कृतेंभुवंविश्वस्मा० ॥ १ ॥ नमत्स्त्रीसुभसत्तरानसुयाशुतराभुवत् ॥ नमत्प्रतिच्यवीयसीनसक्थ्युद्यमीयसीविश्वस्मादिं० ॥ उवेऽअंबसुलाभिकेयथेवांगभविष्यति ॥ भसन्मेऽअंबसक्थिमेशिरोमेवीवहृष्यतिविश्वस्मा० ॥ किंसुबाहोस्वंगुरेपृथुष्टोपृथुजाघने ॥ किंशूरपत्निनस्त्वमभ्यमीषिवृषाकपिंविश्वस्मा० ॥ अवीरामिवमामयंशरारुरभिमन्यते ॥ उताहमस्मिवीरिणींद्रपत्नीमरुत्सखाविश्वस्मा० ॥ संहोत्रंस्मपुरानारीसमनंवावगच्छति ॥ वेधाऽऋतस्यवीरिणींद्रपत्नीमहीयतेविश्वस्मा० ॥ २ ॥ इंद्राणीमासुनारिषु० ऋ० १ ॥ नाहमिंद्राणिरारणसख्युर्वृषाकपेर्ऋते ॥ यस्येदमप्यंहविःप्रियंदेवेषुगच्छतिविश्वस्मा० ॥ वृषाकपायिरेवतिसुपुत्रऽआदुसुस्नुषे ॥ घसंत्तऽइंद्रऽउक्षणःप्रियंकाचित्करंहविर्विश्वस्मा० ॥ उक्ष्णोहिमेपंचदशसाकंपचंतिविंशतिं ॥ उताहमद्मिपीवइदुभाकुक्षीपृणंतिमेविश्वस्मा० ॥ वृषभोनतिग्मश्रृंगोंतर्यूथेषुरोरुवत् ॥ मंथस्तऽइंद्रशंहृदेयंतेसुनोतिभावयुर्विश्वस्मादिं० ॥ ३ ॥ नसेशेयस्यरंबतेंतरासक्थ्याकपृत् ॥ सेदीशेयस्यरोमशंनिषेदुषोविजृंभतेविश्वस्मा० ॥ नसेशेयस्यरोमशंनिषेदुषोविजृंभते ॥ सेदीशेयस्यरंबतेंतरासक्थ्याकपृद्विश्वस्मा० ॥ अयमिंद्रवृषाकपिःपरस्वंतंहतंविदत् ॥ असिंसूनांनवंचरुमादेधस्यानऽआचितंविश्वस्मादिं० ॥ अयमेमिविचाकशद्विचिन्वन्दासमार्यं ॥ पिबामिपाकसुत्वनोभिधीरमचाकशंविश्वस्मा० ॥ धन्वचयत्कृंतत्रंचकतिस्वित्तावियोजना ॥ नेदीयसोवृषाकपेस्तमेहिगृहाँउपविश्वस्मा० ॥ पुनरेहिवृषाकपेसुवितार्कल्पयावहै ॥ यऽएषःस्वप्ननंशनोस्तमेषिपथापुनर्विश्वस्मा० ॥ यदुदंचोवृषाकपेगृहमिंद्राजगंतन ॥ क्व१स्यपुल्वघोमृगःकमगंजनयोपनोविश्वस्मा० ॥ पर्शुर्हनाममानवीसाकंससूवविंशतिं ॥ भद्रंभलत्यस्याऽअभूद्यस्याऽउदरमामयद्विश्वस्मादिं० ॥४॥ मूर्धाभुवोभवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन् ॥ मायामूतुयज्ञियानामेतामपोयत्तूर्णिश्चरतिप्रजानन् ॥ दृशेन्योयोमहिनासमिद्धोरोचतदिवियोनिर्विभावा ॥ तस्मिन्नग्नौसूक्तवाकेनदेवाहविर्विश्वऽआजुहवुस्तनूपाः॥ सूक्तवाकंप्रथममादिदग्निमादिद्धविरजनयंतदेवाः ॥ सऽएषांयज्ञोऽअभवत्तनूपास्तंद्यौर्वेदतंपृथिवीतमापः ॥ यंदेवासोजनयंताग्निंयस्मिन्नाजुहवुर्भुवनानिविश्वा ॥ सोऽअर्चिषापृथिवींद्यामुतेमामृजूयमानोऽअतपन्महित्वा ॥ स्तोमेनहिदिविदेवासोऽअग्निमजीजनञ्छक्तिभीरोदसिप्रां ॥ तमूऽअकृण्वन्त्रेधाभुवेकंसऽओषधीःपचतिविश्वरूपाः ॥ ११ ॥ यदेदेनमदधुर्यज्ञियासोदिविदेवाःसूर्यमादितेयं ॥ यदाचरिष्णूमिथुनावभूतामादित्प्रापश्यन्भुवनानिविश्वा ॥ विश्वस्माऽअग्निंभुवनायदेवावैश्वानरंकेतुमह्नामकृण्वन् ॥ आयस्ततानोषसोविभातीरपोऊर्णोतितमोऽअ

१ मूर्धाभुवइतिषोडशानामांगिरसोमूर्धन्वान्वामदेव्योवासूर्यवैश्वानरौत्रिष्टुप् ॥

चिंषायन् ॥ वैश्वानरंकवयोयज्ञियासोग्निंदेवाऽअंजनयन्नजुर्यं ॥ नक्षंत्रंप्रत्नममिंनच्चरिष्णुयक्षस्याध्यंक्षंतविषंबृहंतं ॥ वैश्वानरंविश्वहांदीदिवांसंमंत्रैरग्निंकविमच्छावदामः ॥ योमंहिम्नापरिबभूवोर्वीउतावस्तांदुतदेवःपरस्तात् ॥ द्वेस्रुतीऽअंश्रृणवंपितृणामहंदेवानामुतमर्त्यानां ॥ ताभ्यामिदंविश्वमेजत्समेतियदंतरापितरंमातरंच ॥ १२ ॥ द्वेसंमीचीबिंभृतश्चरंतंशीर्षतोजातंमनंसाविमृष्टं ॥ सप्रत्यङ्विश्वाभुवनानितस्थावप्रयुच्छन्तरणिर्भ्राजमानः ॥ यत्रावदेंतेऽअवरःपरंश्चयज्ञन्योःकतरोनौविवेद ॥ आशेकुरित्संधमादंसखायोनक्षंतयज्ञंकइदंविवोचत् ॥ कत्यग्नयःकतिसूर्यासःकत्युषासःकत्युस्विदापः ॥ नोपस्पिजंवःपितरोवदामिपृच्छामिवःकवयोविद्मनेकं ॥ यावन्मात्रमुषसोनप्रतीकंसुपर्ण्योंउवसंतेमातरिश्वः । तावद्दधात्युपयज्ञमायन्ब्राह्मणोहोतुरवरोनिषीदन् ॥ १३ ॥ [1]प्रैतेवंदंतुप्रवयंवंदामग्रावभ्योवाचंवदतावदंद्भ्यः ॥ यदंद्रयःपर्वताःसाकमाशवःश्लोकंघोषंभरथेंद्रायसोमिनः ॥ १ ॥ [2]हयेजायेमनंसातिष्ठघोरेवचांसिमिश्राकृणवावहैनु ॥ ननौमंत्राऽअनुंदितासएतेमयस्करन्परंतरेचनाहन् ॥ [3]यासुजूर्णिःश्रेणिःसुम्नऽआपिर्ह्रदेचक्षुर्नग्रंथिनीचरण्युः ॥ ताऽअंजयोरुणयोनसंस्रुःश्रियेगावोनधेनवोनवंत ॥ [4]कदासूनुःपितरंजातइच्छाच्चक्रंना

१ प्रैतेवदंत्वित्यस्यकाद्रवेयोर्बुदःसर्पोग्रावाणोजगती ॥ २ हयेजायेइत्यस्यैलःपुरूरवाउर्वशीत्रिष्टुप् ॥ ३ यासुजूर्णिरित्यस्यैलःपुरूरवाउर्वशीत्रिष्टुप् ॥ ४ कदासूनुरित्यस्यैलःपुरूरवाउर्वशीत्रिष्टुप् ॥



श्रुवर्तयद्विजानन् ॥ कोदंपतीसमंनसावियूयोदधयदग्निःश्वशुरेषुदीदयत् ॥ [1]प्रतिब्रवाणिवर्तयंतेऽअश्रुचक्रंनक्रंदद्दाध्यैशिवायै ॥ प्रतत्तेहिनवायंत्तेऽअस्मेपरेह्यस्तंनहिमूरमापः ॥ १ ॥ [2]प्रतेमहेविदथेशंसिषंहरीप्रतेवन्वेवनुषोहर्यतंमदं ॥ घृतंनयोहरिभिश्चारुसेचंतऽआत्वाविशंतुहरिवर्पसंगिरः ॥ हरिंहियोनिमभियेसमस्वरन्हिन्वंतोहरीदिव्यंयथासदः ॥ आयंपृणंतिहरिभिर्नधेनवऽइंद्रायशूषंहरिवंतमर्चत ॥ सोऽअस्यवज्रोहरितोयऽआयसोहरिर्निकामोहरिरागभस्त्योः ॥ द्युम्नीसुशिप्रोहरिमन्युसायकऽइंद्रेनिरूपाहरितामिमिक्षिरे ॥ दिविनकेतुरधिधायिहर्यतोविव्यचद्वज्रोहरितोनरंह्या ॥ तुददहिंहरिशिप्रोयऽआयसःसहस्रशोकाऽअभवद्धरिंभरः ॥ त्वंत्वमहर्यथाऽउपस्तुतःपूर्वेभिरिंद्रहरिकेशयज्वभिः ॥ त्वंहर्यसितवविश्वमुक्थ्य१मसामिराधोहरिजातहर्यतं ॥ २ ॥ तावज्रिणंमंदिनंस्तोम्यंमदऽइंद्ररथेवहतोहर्यताहरी ॥ पुरूण्यस्मैसवनानिहर्यतऽइंद्रायसोमाहरयोदधन्विरे ॥ अरंकामायहरयोदधन्विरेस्थिरायहिन्वन्हरयोहरीतुरा ॥ अर्वद्भिर्योहरिभिर्जोषमीयतेसोअस्यकामंहरिवंतमानशे ॥ हरिश्मशारुर्हरिकेशऽआयसस्तुरस्पेयेयोऽहरिपाऽअवर्धत ॥ अर्वद्भिर्योहरिभिर्वाजिनीवसुरतिविश्वादुरितापारिषद्धरी ॥ स्रुवेवयस्यहरिणीविपेततुः

१ प्रतिब्रवाणीत्यस्योर्वशीऋषिकापुरूरवोदेवतात्रिष्टुप् ॥ २ प्रतेमहइतित्रयोदशर्चस्यसूक्तस्यऐंद्रोबरुःसर्वहरिर्वाइंद्रोहरिस्तुतिर्जगत्यंत्येद्वेत्रिष्टुभौ ॥

शिप्रेवाजायहरिणीदविध्वतः ॥ प्रयत्कृतेचमसेमर्मृजद्धरीपीत्वामदस्यहर्यतस्यांधसः ॥ उतस्मसद्मंहर्यतस्यपस्त्योरु
रत्योनवाजंहरिवाँऽअचिक्रदत् ॥ महीचिद्धिधिषणाहर्यदोजसाबृहद्वयोदधिषेहर्यतश्चिदा ॥ ३ ॥ आरोदसीहर्यमा
णोमहित्वानव्यंनव्यंहर्यसिमन्मनुप्रियं ॥ प्रपस्त्यमसुरहर्यतंगोराविष्कृधिहरयेसूर्याय ॥ आत्वाहर्यतंप्रयुजोजनानां
रथेवहंतुहरिशिप्रमिंद्र ॥ पिबायथाप्रतिभृतस्यमध्वोहर्यन्यज्ञंसधमादेदशोणिं ॥ अपाःपूर्वेषांहरिवःसुतानामथोऽइ
दंसवनंकेवलंते ॥ ममद्धिसोमंमधुमंतमिंद्रसत्रावृषन्जठरआवृषस्व ॥४॥ बृहस्पतेप्रतिमेदेवतामिहिमित्रोवायद्वरुणो
वासिपूषा ॥ आदित्यैर्वायद्वसुभिर्मरुत्वान्त्सपर्जन्यंशंतनवेवृषाय ॥ आदेवोदूतोअजिरश्चिकित्वान्त्वद्देवापेऽअभि
मामगच्छत् ॥ प्रतीचीनःप्रतिमामावृत्स्वदधामितेद्युमतींवाचमासन् ॥ अस्मेधेहिद्युमतींवाचमासन्बृहस्पतेऽअन
मीवामिषिरां ॥ ययावृष्टिंशंतनवेवनावदिवोद्रप्सोमधुमाँऽआविवेश ॥ आनोद्रप्सामधुमंतोविशंत्विंद्रदेह्यधिरथं
सहस्रं ॥ निषीदहोत्रमृतुथायजस्वदेवान्देवापेहविषासपर्य ॥ आर्ष्टिषेणोहोत्रमृषिर्निषीदन्देवापिर्देवसुमतिंचिकि
त्वान् ॥ सऽउत्तरस्मादधरंसमुद्रमपोदिव्याऽअसृजद्वर्ष्याऽअभि ॥ अस्मिन्त्समुद्रेऽअध्युत्तरस्मिन्नापोदेवेभिर्निवृताऽ
अतिष्ठन् ॥ ताऽअद्रवन्नार्ष्टिषेणेनसृष्टादेवापिनाप्रेषितामृक्षिणीषु ॥ ५ ॥ यद्देवापिःशंतनवेपुरोहितोहोत्रायवृतः

१ बृहस्पतइतिद्वादशर्चस्यसूक्तस्यार्ष्टिषेणोदेवापिर्वृष्टिकामोविश्वेदेवास्त्रिष्टुप् ॥

कृपयन्नदीधेत् ॥ देवश्रुतंवृष्टिवनिंरराणोबृहस्पतिर्वाचमस्माऽअयच्छत् ॥ यंत्वादेवापिःशुशुचानोऽअग्नआर्ष्टिषेणो
मनुष्यःसमीधे ॥ विश्वेभिर्देवैरनुमद्यमानःप्रपर्जन्यमीरयावृष्टिमंतं ॥ त्वांपूर्वऋषयोगीर्भिरायन्त्वामध्वरेषुपुरुहूत
विश्वे ॥ सहस्राण्यधिरथान्यस्मेऽआनोयज्ञंरोहिदश्वोपयाहि ॥ एतान्यग्नेनवतिर्नवत्वेऽआहुतान्यधिरथासहस्रा ॥
तेभिर्वर्धस्वतन्वःशूरपूर्वीर्दिवोनोवृष्टिमिषितोरिरीहि ॥ एतान्यग्नेनवतिंसहस्रासंप्रयच्छवृष्णइंद्रायभागं ॥ विद्वा
न्पथऽऋतुशोदेवयानानप्यौलानंदिविदेवेषुधेहि ॥ अग्नेबाध० ऋक् ॥ १ ॥ उद्बुध्यध्वंसमनसः० ॥ ऋक् १ ॥
मंद्राकृणुध्वंधियऽआतनुध्वंनावमरित्रपरणींकृणुध्वं ॥ इष्कृणुध्वमायुधारंकृणुध्वंप्रांचंयज्ञंप्रणयतासखायः ॥ युनक्त
सीराविधुगातनुध्वंकृतेयोनौवपतेहबीजं ॥ गिराचश्रुष्टिःसभराऽअसन्नोनेदीयऽइत्सृण्यःपक्वमेयात् ॥ सीरायुंजंति०
ऋक् १ ॥ निराहावान्कृणोतनसंवरत्रादधातन ॥ सिंचामहाऽअवतमुद्रिणंवयंसुषेकमनुपक्षितं ॥ इष्कृताहावमव
तंसुवरत्रंसुषेचनं ॥ उद्रिणंसिंचेऽअक्षितं ॥ ६ ॥ प्रीणीताश्वान्हितंजयाथस्वस्तिवाहंरथमित्कृणुध्वं ॥ द्रोणाहाव
मवतमश्मचक्रमंसत्रकोशंसिंचतानृपाणं ॥ व्रजंकृणुध्वंसहिवोनृपाणोवर्मसीव्यध्वंबहुलापृथूनि ॥ पुरःकृणुध्वमाय

१ उद्बुध्यध्वमितिद्वादशर्चस्यसूक्तस्यसौम्योबुधोविश्वेदेवाऋत्विक्स्तुतिर्वात्रिष्टुप्चतुर्थ्यादितिसृणांक्रमेणगायत्रीबृहतीगायत्रीनवमी
द्वादश्यौद्वेजगत्यौ ॥

सीरधृष्टामावःसुस्रोच्चमसोदंहतातं ॥ आवोधियंयज्ञियांवर्तऊतयेदेवादेवींयजतांयज्ञियामिह ॥ सानोदुहीयद्यवसे
वगत्वीसहस्रधारापयसामहीगौः ॥ आतूषिंचहरिमींद्रोरुपस्थेवाशीभिस्तक्षताश्मन्मयीभिः ॥ परिष्वजध्वंदशकक्ष्या
भिरुभेधुरौप्रतिवह्नियुनक्त ॥ उभेधुरौवह्निरापिब्दमानोंतर्योनेवचरतिद्विजानिः ॥ वनस्पतिंवनऽआस्थापयध्वंनि
षूदधिध्वमखनंतऽउत्सं ॥ कपृन्नरःकपृथमुद्दधातनचोदयतखुदतवाजसातये ॥ निष्टिग्र्यःपुत्रमाच्यावयोतयऽइंद्रंस
बाधऽइहसोमपीतये ॥ [1]उभाउनूनंतदिदर्थयेथेवितन्वाथेधियोवस्त्रापसेव ॥ सध्रीचीनायातवेप्रेमजीगःसुदिनेवपृक्ष
आतंसयेथे ॥ १ ॥ [2]सृण्येवजर्भरीतुर्फरीतूनैतोशेवतुर्फरीपर्फरीका ॥ उदन्यजेवजेमनामदेरूतामेजराय्वजरंमरायु ॥
पज्रेवचर्चरंजारंमरायुक्षद्मेवार्थेषुतर्तरीथऽउग्रा ॥ ऋभूनापत्खरमज्राखरज्रुर्वायुर्नपर्फरत्क्षयद्रयीणां ॥ घर्मेवमधुजठ
रेसनेरूभगेवितातुर्फरीफारिवारं ॥ पतरेवचचराचंद्रनिर्णिङ्मनऽऋंगामनन्या३नजग्मी ॥ बृहंतेवगंभरेषुप्रतिष्ठांपा
देवगाधंतरतेविदाथः ॥ कर्णेवशासुरनुहिस्मराथोंशेवनोभजतंचित्रमप्नः ॥ आरंगरेवमध्वेरयेथेसारघेवगविनीचीन
बारे ॥ कीनारेवस्वेदमासिष्विदानाक्षामेवोर्जासूयवसात्संचेथे ॥ ऋध्यामस्तोमं० ऋक् ॥ १ ॥ [3]दक्षिणाश्वंदक्षिणागांद

१ उभावित्यस्यकाश्यपोभूतांशोश्विनौत्रिष्टुप् ॥ २ सृण्येवेतिषण्णांकाश्यपोभूतांशोश्विनौत्रिष्टुप् ॥ ३ दक्षिणाश्वमितिपंचानामांगि
रसोदिव्यःप्राजापत्यादक्षिणावादक्षिणादातारोवात्रिष्टुप् ॥

दातिदक्षिणाचंद्रमुतयद्धिरण्यं ॥ दक्षिणान्नंवनुतेयोनऽआत्मादक्षिणांवर्मकृणुतेविजानन् ॥ नभोजाम्रुर्नन्य
र्थमीयुर्नरिष्यंतिनव्यथंतेहभोजाः ॥ इदंयद्विश्वंभुवनंस्वश्चैतत्सर्वंदक्षिणैभ्योददाति ॥ भोजाजिग्युःसुरभिंयोनि
मग्रेभोजाजिग्युर्वध्वं१यासुवासाः ॥ भोजाजिग्युरंतःपेयंसुरायाभोजाजिग्युर्येऽअहूताःप्रयंति ॥ भोजायाश्वंसंमृजं
त्याशुंभोजायास्तेकन्या३शुंभमाना ॥ भोजस्येदंपुष्करिणीवमेश्मपरिष्कृतंदेवमानेवचित्रं ॥ भोजमश्वाःसुष्टुवाहोव
हंतिसुवृद्रथोवर्ततेदक्षिणायाः ॥ भोजंदेवासोवताभरेषुभोजःशत्रून्त्समनीकेषुजेता ॥ [1]इमंनोअग्नउपयज्ञमेहिपंचया
मंत्रिवृतंसप्ततंतुं ॥ असोहव्यवाळुतनःपुरोगाज्योगेवदीर्घंतमऽआशयिष्ठाः ॥ अदेवाद्देवःप्रचतागुहायन्प्रपश्यमानो
अऽमृतत्वमेमि ॥ शिवंयत्संतमशिवोजहामिस्वात्सख्यादरणींनाभिमेमि ॥ पश्यन्नन्यस्याऽअतिथिंवयायाऽऋतस्य
धामविमिमेपुरूणि ॥ शंसामिपित्रेऽअसुरायशेवमयज्ञियाद्यज्ञियंभागमेमि ॥ बह्वीःसमाऽअकरमंतरस्मिन्निंद्रंवृणा
नःपितरंजहामि ॥ अग्निःसोमोवरुणस्तेच्यवंतेपर्यावर्द्राष्ट्रंतदवाम्यायन् ॥ निर्मायाऽउत्येऽअसुराअभूवन्त्वंचमाव
रुणकामयासे ॥ ऋतेनराजन्ननृतंविविंचन्ममराष्ट्रस्याधिपत्यमेहि ॥ [2]अपप्राचऽइंद्रविश्वाँऽअमित्रानपापाचोऽअभि

१ इमंनोअग्नइतिपंचानामग्निवरुणसोमाऋषयःद्वितीयादितिसृणामग्निर्ऋषिराद्यादिचतसृणामग्निःपंचम्यालिंगोक्तादेवतात्रिष्टुप् ॥
२ अपप्राचइत्यस्यकाक्षीवतःसुकीर्तिरिंद्रस्त्रिष्टुप् ॥

भूतेनुदस्व ॥ अपोदींचोऽअपंशूराधराचंऽउरौयथातवशर्मन्मदेम ॥ १ ॥ [1]केश्य१ग्निंकेशीविषंकेशीबिंभर्तिरोदसी॥ केशीविश्वंस्वर्दृशेकेशीदंज्योतिरुच्यते ॥ मुनयोवातरशनाःपिशंगावसतेमला ॥ वातस्यानुध्राजिंयंतियद्देवासोऽअविक्षत ॥ उन्मंदितामौनेयेनवाताँऽआतस्थिमावयं ॥ शरीरेदस्माकंयूयंमर्तासोऽअभिपश्यथ ॥ अंतरिक्षेणपततिविश्वारूपावचाकशत् ॥ मुनिर्देवस्यदेवस्यसौकृत्यायसखाहितः ॥ वातस्याश्वोवायोःसखाथोदेवेषितोमुनिः ॥ उभौसमुद्रावाक्षेतियश्चपूर्वउतापरः ॥ अप्सरसांगंधर्वाणांमृगाणांचरणेचरन् ॥ केशीकेतस्यविद्वान्सखास्वादुर्मदिन्तमः ॥ वायुरस्माऽउपामंथत्पिनष्टिस्माकुनन्नमा ॥ केशीविषस्यपात्रेणयद्रुद्रेणापिबत्सह ॥ १ ॥ [2]उतदेवाऽअवहितंदेवाऽउन्नयथापुनः ॥ उतागश्चक्रुषंदेवादेवाजीवयथापुनः ॥ द्वाविमौवातौवातऽआसिंधोरापरावतः ॥ दक्षंतेऽअन्यऽआवातुपरान्योवातुयद्रपः ॥ आवातवाहिभेषजंविवातवाहियद्रपः ॥ त्वंहिविश्वभेषजोदेवानांदूतऽईयसे ॥ आत्वागमंशंतातिभिरथोऽअरिष्टतातिभिः ॥ दक्षंतेभद्रमाभार्षंपरायक्ष्मंसुवामिते॥ त्रायंतां० ऋक् ३ ॥ २ ॥ [3]अग्ने

१ केशीतिसप्तर्चस्यसूक्तस्यवातरशनाजूतिर्वातजूतिर्विप्रजूतिर्वृषाणकःकरिक्रतएतशऋष्यश्रृंगश्चैकर्चाःकेशिनोनुष्टुप् ॥ २ उतदेवाइतिसप्तर्चस्यसूक्तस्यक्रमेणभरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठाविश्वेदेवाअनुष्टुप् ॥ ३ अग्नेअच्छेतिषळर्चस्यसूक्तस्यतापसोग्निर्विश्वेदेवाअनुष्टुप् ॥

अच्छावदेहनःप्रत्यङ्नःसुमनाभव ॥ प्रनोयच्छविशस्पतेधनदाऽअसिनस्त्वं ॥ प्रनोयच्छत्वर्यमाप्रभगःप्रबृहस्पतिः ॥ प्रदेवाःप्रोतसूनृताराथोदेवीददातुनः ॥ सोमंराजानमवसेग्निंगीर्भिर्हवामहे ॥ आदित्यान्विष्णुंसूर्यंब्रह्माणंचबृहस्पतिं ॥ इंद्रवायूबृहस्पतिंसुहवेहहवामहे॥ यथानःसर्वइज्जनःसंगत्यांसुमनाऽअसत् ॥ अर्यमणंबृहस्पतिमिंद्रंदानायचोदय ॥ वातंविष्णुंसरस्वतींसवितारंचवाजिनं ॥ त्वंनोअग्नेऽअग्निभिर्ब्रह्मयज्ञंचवर्धय ॥ त्वन्नोदेवतातयेरायोदानायचोदय॥ आयंनेतेपरायणेदूर्वा० ऋ० १ ॥ [1]त्यंचिदत्रिमृतजुरमर्थमश्वंनयातवे ॥ कक्षीवंतंयदीपुनारथंनकृणुथोनवं ॥ ॥ १ ॥ [2]सवितायंत्रैःपृथिवीमरम्णादस्कंभनेसवितासामदृंहत् ॥ अश्वमिवाधुक्षद्धुनिमंतरिक्षमतूर्तेबद्धंसवितासमुद्रं ॥ १ ॥ [3]सोमऽएकेभ्यःपवतेघृतमेकऽउपासते ॥ येभ्योमधुप्रधावतिताँश्चिदेवापिगच्छतात् ॥ तपसायेऽअनाधृष्यास्तपसायेस्वर्ययुः ॥ तपोयेचक्रिरेमहस्ताँश्चिदे० ॥ येयुध्यंतेप्रधनेषुशूरासोयेतनूत्यजः ॥ येवासहस्रदक्षिणास्ताँ० ॥ येचित्पूर्वऽऋतसापऽऋतावानऽऋतावृधः ॥ पितृन्तपस्वतोयमताँ० ॥ सहस्रणीथाःकवयोयेगोपायंतिसूर्यं ॥ ऋषी

१ त्यंचिदित्यस्यसांख्योत्रिरश्विनावनुष्टुप् ॥ २ सवितेत्यस्यहैरण्यस्तूपोर्चतःसवितात्रिष्टुप् ॥ ३ सोमएकेभ्यइतिपंचर्चस्यसूक्तस्ययमीभाववृत्तमनुष्टुप् ॥

न्तर्पस्वतोयमतपोजाँऽअपिंगच्छतात् ॥ ४ ॥ [1]अरायिकाणेविकंटेगिरिंगच्छसदान्वे ॥ शिरिंबिठस्यसत्वंभिस्तेभिष्ट्वा
चातयामसि ॥ चत्तोइतश्चत्तामुतःसर्वाभ्रूणान्यारुषी ॥ अराय्यंब्रह्मणस्पतेतीक्ष्णशृंगोदृषन्निहि ॥ अदोयद्दारुप्लवं
तेसिंधोःपारेअपूरुषं ॥ तदारंभस्वदुर्हणोतेनंगच्छपरस्तरं ॥ यद्धप्राचीरजंगंतोरोमंडूरधाणिकीः ॥ हताऽइंद्रस्यश
त्रवःसर्वेबुद्बुदयाशवः ॥ परीमेगामनेषतपर्यग्निमहृषत ॥ देवेष्वक्रतश्रवःकइमाँऽआदधर्षति ॥ १ ॥ [2]वातस्यनुमहि
मानंरथस्यरुजन्नेतिस्तनयन्नस्यघोषः ॥ दिविस्पृग्यात्यरुणानिकृण्वन्नुतोऽएतिपृथिव्यारेणुमस्यन् ॥ संप्रेरतेऽअनुवा
तस्यविष्ठाऽऐनंगच्छंतिसमनंनयोषाः ॥ ताभिःसयुक्सरथंदेवऽईयतेस्यविश्वस्यभुवनस्यराजा ॥ अंतरिक्षेपथिभिरी
यमानोननिविंशतेकतमच्चनाहः ॥ अपांसखाप्रथमजाऽऋतावाक्वस्विज्जातःकुतऽआबभूव ॥ आत्मादेवानांभुवन
स्यगर्भोयथावशंचरतिदेवऽएषः ॥ घोषाऽइदस्यशृण्विरेनरूपंतस्मैवातायहविषाविधेम ॥ १ ॥ [3]मयोभूर्वातोअभिवा
तूस्राऽऊर्जस्वतीरोषधीरारिशंताम् ॥ पीवस्वतीर्जीवधन्याःपिबंत्ववसायपद्वतेरुद्रमृळ ॥ याःसरूपाविरूपाऽएकरू
पायासामग्निरिष्ट्यानामानिवेद ॥ याऽअंगिरसस्तपसेहचक्रुस्ताभ्यःपर्जन्यमहिशर्मयच्छ ॥ यादेवेषुतन्व1मैरयंत

१ अरायीतिपंचर्चस्यसूक्तस्यभरद्वाजःशिरिंबिठोऽलक्ष्मीनाशनोद्वितीयातृतीयाब्राह्मणस्पत्येंत्यायाविश्वेदेवाअनुष्टुप् ॥ २ वातस्ये
तिचतुर्ऋचस्यसूक्तस्यवातायनोनिलोवायुस्त्रिष्टुप् ॥ ३ मयोभूरितिचतुर्ऋचस्यसूक्तस्यकाक्षीवतःशंबरोगौस्त्रिष्टुप् ॥



यासांसोमोविश्वारूपाणिवेद ॥ ताऽअस्मभ्यंपयसापिन्वमानाःप्रजावतीरिंद्रगोष्ठेरिरीहि ॥ प्रजापतिर्मह्यमेतारराः
णोविश्वैर्देवैःपितृभिःसंविदानः ॥ शिवाःसतीरुपनोगोष्ठमाकस्तासांवयंप्रजयासंसदेम ॥ १ ॥ [1]आत्वाहार्षमंतरेधि
ध्रुवस्तिष्ठाविचाचलिः ॥ विशस्त्वासर्वावांछंतुमात्वद्राष्ट्रमधिभ्रशत् ॥ इहैवैधिमापच्योष्ठाःपर्वतऽइवाविचाचलिः ॥
इंद्रऽइवेहध्रुवस्तिष्ठेहराष्ट्रमुधारय ॥ इममिंद्रोऽअदीधरद्ध्रुवंध्रुवेणहविषा ॥ तस्मैसोमोअधिब्रवत्तस्माऽउब्रह्मणस्प
तिः ॥ ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवासःपर्वताऽइमे ॥ ध्रुवंविश्वमिदंजगद्ध्रुवोराजाविशामयं ॥ ध्रुवंतेराजावरुणोध्रुवंदेवो
बृहस्पतिः ॥ ध्रुवंतऽइंद्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवं ॥ ध्रुवंध्रुवेणहविषाभिसोमंमृशामसि ॥ अथोतऽइंद्रःकेवलीर्वि
शोबलिहृतस्करत् ॥ १ ॥ [2]वातऽआवातुभेषजंशंभुमयोभुनोहृदे ॥ प्रणऽआयूंषितारिषत् ॥ उतवातपितासिनउत
भ्रातोतनःसखा ॥ सनोजीवातवेकृधि ॥ यददोवाततेगृहे३मृतस्यनिधिर्हितः ॥ ततोनोदेहिजीवसे ॥ १ ॥ [3]प्रनूनं
जातवेदसमश्वंहिनोतवाजिनं ॥ इदंनोबर्हिरासदे ॥ अस्यप्रजातवेदसोविप्रवीरस्यमीळ्हुषः ॥ महीमियर्मिसुष्टुतिं ॥
यारुचोजातवेदसोदेवत्राहव्यवाहनीः ॥ ताभिर्नोयज्ञमिन्वतु ॥ १ ॥ [4]संसमिद्युवसेवृषन्नग्नेविश्वान्यर्यऽआ ॥ इळ

१ आत्वेतिषळर्चस्यध्रुवोराजस्तुतिरनुष्टुप् ॥ २ वातेतितृचस्यवातायनउलोवायुर्गायत्री ॥ ३ प्रनूनमितितृचस्याग्निःश्येनोजातवेदागा
यत्री ॥ ४ संसमितिचतुर्ऋचस्यसूक्तस्यांगिरसःसंवननःसंज्ञानमनुष्टुबाद्यायाअग्निस्तृतीयात्रिष्टुप् ॥

स्पदेसमिध्यसेसनोवसून्याभर ॥ संगच्छध्वंसंवदध्वंसंवोमनांसिजानतां ॥ देवाभागंयथापूर्वेसंजानानाऽउपासते ॥ समानोमंत्रःसमितिःसमानीसमानंमनःसहचित्तमेषां ॥ समानंमंत्रमभिमंत्रयेवःसमानेनवोहविषाजुहोमि ॥ समानीवऽआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥१॥ ॥ अथपरिशिष्टम् ॥ संज्ञानंमुशनावदत्संज्ञानंवरुणोवदत् ॥ संज्ञानमिंद्रश्चाग्निश्चसंज्ञानंसवितावदत् ॥ संज्ञानंनःस्वेभ्यःसंज्ञानमरणेभ्यः ॥ संज्ञानमश्विनायुवमिहास्मासुनियच्छतं ॥ यत्कक्षीवांसंवननंपुत्रोऽअंगिरसाभवेत् ॥ तेननोद्यविश्वेदेवाःसंप्रियांसमचीचरन् ॥ संवोमनांसिजानतांसमाकूतिर्मनामसि ॥ असौयोविमनादनस्तंसमावर्तयामसि ॥ १ ॥ नैर्हस्त्यंसेनादरणंपरिवर्त्मैतुयद्धविः ॥ तेनामित्राणांबाहून्हविषाशोषयामसि ॥ परिवर्त्मान्येषामिंद्रःपूषानुयच्छतु ॥ तेषांवोअग्निदग्धानामग्निमूढानामिंद्रोहंतुवरंवरं ॥ ऐषुनह्यवृषाजिनंहारिणस्यहिप्रियंयथा ॥ पराङमित्राँएषत्वर्वाचीगौरुपेजतु ॥ ॥ २ ॥ प्राध्वराणांपतेवसोहोतर्वरेण्यक्रतो ॥ तुभ्यंगायत्रमृच्यते ॥ गोकामोऽअन्नकामःप्रजाकामउतकश्यपः ॥ भूतंभविष्यत्प्रस्तौतिमहद्ब्रह्मैकमक्षरं ॥ यदक्षरंभूतकृतोविश्वेदेवाऽउपासते ॥ महर्षिमस्यगोप्तारंजमदग्निमकुर्वत ॥ जमदग्निराप्यायतेच्छंदोभिश्चतुरक्षरैः ॥ राज्ञासोमस्यदक्षेणब्रह्मणावीर्यावता ॥ शिवानःप्रदिशोदिशःसत्यानःप्रदिशोदिशः ॥ १ ॥ अजोयत्तेजोददृशेशुक्रंज्योतिःपुरोगुहा ॥ तदृषिःकश्यपःस्तौतिसत्यंब्रह्मचराचरंध्रुवंब्रह्मचराचरं ॥

त्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषं ॥ अगस्त्यस्यत्र्यायुषंयद्देवानांत्र्यायुषं ॥ तन्मेऽअस्तुत्र्यायुषंशतायुषंबलायुषं ॥ ॐचमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजंशंनोऽअस्तुद्विपदेशंचतुष्पदे ॥ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ २ ॥ ॥ इतिमंत्रसंहितायांप्रकीर्णमंत्राः ॥ अश्वत्थोपनयनेनैरुक्तखंडंतथाप्रोक्षणविधौमहानाम्नीतिब्राह्मणखंडंच ॥ प्रावेपामाबृहतोमादयंतिप्रवातेजाइरिणेवर्वृताना ॥ सोमस्येवमौजवतस्यभक्षोविभीदकोजागृविर्मह्यमच्छान् ॥ प्रवेपिणोमामहतोविभीदकस्यफलानिमादयंतिप्रवातेजाःप्रवणेजाइरिणेवर्तमानाइरिणंनिर्ऋणमृणातेरपार्णभवत्यपरताअस्मादोषधयइतिवा ॥ सोमस्येवमौजवतस्यभक्षः ॥ मौजवतोमूजवतिजातोमूजवान्पर्वतोमुंजवान्मुंजोविमुच्यतइषीकयेषीकेषतेर्गतिकर्मणइयमपीतरेषीकैतस्मादेवविभीदकोविभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्प्रशंसत्येनान्प्रथमयानिंदत्युत्तराभिर्ऋषेरक्षपरिद्यूनस्यैतदार्षवेदयंतेग्रावाणोहंतेर्वागृणातेर्वागृह्णातेर्वातेषामेषाभवति ॥ इतिनैरुक्तखंडं ॥ महानाम्नीनामुपसर्गानुपसृजत्ययंवैलोकःप्रथमामहानाम्न्यंतरिक्षलोकोद्वितीयासौलोकस्तृतीयासर्वेभ्योवाएषलोकेभ्यःसन्निर्मितोयत्षोळशीतद्यन्महानाम्नीनामुपसर्गानुपसृजतिसर्वेभ्यएवैनंतल्लोकेभ्यःसन्निर्मिमीतेसर्वेभ्योलोकेभ्यः

सन्निर्मितेनषोळशिनाराध्नोतियएवंवेदंप्रप्रवस्त्रिष्टुभमिषमर्चतप्रार्चतं ॥ योव्यतीरँफाणयदितिंप्रज्ञाताअनुष्टुभःशं
सतितद्यथेहचेहचापथेनचरित्वांपंथानंपर्यवेयात्ताद्दृक्तंद्यत्प्रज्ञाताअनुष्टुभःशंसतिंसयोव्याप्तोगतश्रीरिवमन्येतांविहृतं
षोळशिनंशंसयेंन्नेच्छंदसांकृछ्राद्वपद्याइत्यंथयःपाप्मानमपजिघांसुस्यांदिह्वृतंषोळशिनंशंसयेंद्व्यतिषक्तइववैपुरुषःपा
प्मनांव्यतिषक्तमेवास्मैतत्पाप्मानंशमलमपहंत्यपपाप्मानंहतेयएवंवेदोंद्यद्ब्रध्नस्यविष्टपमिंत्युत्तमयापरिदधातिंस्वर्गोवै
लोकोब्रध्नस्यविष्टपंस्वर्गमेवैतंलोकंयजमानंगमयंत्यपाःपूर्वेषांहरिवःसुतानामितियजतिंसर्वेभ्योवाएषसवनेभ्यंःसन्नि
र्मितोयत्षोळशींतद्यदपाःपूर्वेषांहरिवःसुतानामितियजतिंपीतवद्वैप्रातःसवनंप्रातःसवनादेवैनंतत्सन्निर्मिमीतेंथोइदं
सवनंकेवलंतइतिंमाध्यंदिनंवैसवनंकेवलंमाध्यंदिनादेवैनंतत्सवनात्सन्निर्मिमीतेंममद्धिसोमंमधुमंतमिंद्रेतिंमद्वद्वैतृ
तीयसवनंतृतीयसवनादेवैनंतत्सन्निर्मिमीतेंसत्रावृषंजठरआवृषस्वेतिंवृषण्वद्वैषोळशिनोरूपंसर्वेभ्योवाएषसवनेभ्यंः
सन्निर्मितोयत्षोळशींतद्यदपाःपूर्वेषांहरिवःसुतानामितियजतिंसर्वेभ्यएवैनंतत्सवनेभ्यंःसन्निर्मिमीतेसर्वेभ्यःसवने
भ्यःसंनिर्मितेनषोळशिनाराध्नोतियएवंवेदंमाहानाम्नीनांपंचाक्षरानुपसर्गानुपसृजंत्येकादशाक्षरेषुपादेषुंसर्वेभ्योवाए
षच्छंदोभ्यंःसन्निर्मितोयत्षोळशींतद्यन्महानाम्नीनांपंचाक्षरांनुपसर्गानुपसृजंत्येकादशाक्षरेषुपादेषुंसर्वेभ्यएवैनंछंदो
भ्यंःसन्निर्मिमीतेसर्वेभ्यश्छंदोभ्यंःसंनिर्मितेनषोळशिनाराध्नोतियएवंवेदं ॥ १ ॥ ॥ इति ॥ ॥



इदं पुस्तकं मुंबय्यां तुकाराम जावजी इत्येतैः स्वकीये "निर्णयसागरा"
ख्यमुद्रणयन्त्रे कोलभाटवीथ्यां २३ गृहे बाळकृष्ण रामचंद्र
घाणेकरद्वारा मुद्रयित्वा प्रकाशितम् ।
शके १८३२, सन १९११.

Published by Tukaram Javaji, Proprietor N. S. Press, 23, Kolbhat Lane, Bombay.

Printed by B. R. Ghanekar, at the N. S. Press, 23, Kolbhat Lane, Bombay.

